Tantra Yukti (तंत्र युक्ति)
of नीलमेघ ~~[illegible]~~ भिषगाचार्य (2)
– Edited by Vayaskara N.S.
Mooss. ~~[illegible]~~ (Vaidyasarathy
Series – Book No. 5.7), 2e
Kottayam, 1979.

(8)

[signature]

Vaidyasarathy Series. Book No. S-7

# TANTRA-YUKTI

SECOND REVISED EDITION.




*Edited by:*

AṢṬA VAIDYA
VAYASKARA N. S. MOOSS

*Published by:*
VAIDYASARATHY PRESS (P) LTD.,
KOTTAYAM : : S. INDIA.
1979

वैद्यसारथिग्रन्थावलिः ग्रन्थांकः सं ७

# तन्त्रयुक्तिः ॥

द्वितीयं संस्करणम् ।

अष्टागदंकारकुलोद्भवेन वयस्करागारनिवासभाजा ।
नारायणस्यात्मभवेन युक्तिस्संशोधिता शंकरशर्मणेऽयम् ॥

कोट्टयनगर्यां वैद्यसारथि प्रस् प्रै. लिमिट्टड् इति नाम्ना
स्थापनेन स्वीये वैद्यसारथिमुद्रणालये
मुद्रयित्वा प्रकाशिता ॥

कोळंबाब्दः 1154 क्रिस्ताब्दः 1979

## प्रस्तावना ॥

---

तन्त्र्यन्ते धार्यन्त आयुर्वेदार्था अनेनेति तन्त्रम् । वैद्यशास्त्रमित्यर्थः । अथवा तन्त्रि कुडुंबधारणे, तस्मिंस्तन्त्रमिति रूपम् । कुडुम्बं शरीरम् । तद्धारयति हितोपदेशाहितनिवारणद्वारेणेति ॥

युज्यन्ते संकल्यन्ते संबध्यन्ते परस्परमर्थाः सम्यक्तया प्राकरणिकेऽभिमतेऽर्थे विरोधव्याघातादिदोषजातमपास्यानया इति युक्तिः । युज् योजने तस्मिन् युक्तिरिति रूपं भवति ॥

•तन्त्रस्य युक्तयस्तन्त्रयुक्तयः । युक्तिशब्दः खल्पायवाची । न ह्येता युक्तीः प्रत्याख्याय शक्यते तन्त्रं प्रणेतुम् । तत्र काश्चिद्युक्तयो वाक्यप्रयोजना काश्चिदर्थप्रयोजना भवन्ति ॥

तन्त्रयुक्तीनां प्रधानप्रयोजनमभिमतार्थसिद्धिः । चरकेऽप्याख्यत्—

**असद्वादिप्रयुक्तानां वाक्यानां प्रतिषेधनम् ।**
**स्ववाक्यसिद्धिरपि च क्रियते तन्त्रयुक्तितः ॥**
**व्यक्ता नोक्ताश्च ये ह्यर्था लीना ये चाप्यनिर्मलाः ।**
**लेशोक्ता ये च केचित्स्युस्तेषां चापि प्रसाधनम् ॥**

शास्त्रतत्वावबोधनार्थं तन्त्रयुक्तीनां विचिन्तनमत्यावश्यकमेव । संग्रहेऽप्येवमुक्तम्—

**अधीयानोऽपि तन्त्राणि तन्त्रयुक्त्यविचक्षणः ।**
**नाधिगच्छन्ति तन्त्रार्थमर्थं भाग्यक्षये यथा ॥**

सुश्रुताचार्योऽपि तन्त्रयुक्तीनां सम्यक्पठनप्रजोजनमुक्तवान् । तद्यथा—

**द्वात्रिंशद्युक्तयो ह्येतास्तन्त्रसारगवेषणे ।**
**मया सम्यग्विनिहिताः शब्दन्यायार्थसंयुताः ॥**

**यो ह्येता विधिवद्वेत्ति दीपभूतास्तु बुद्धिमान् ।**
**स पूजार्हो भिषक्श्रेष्ठ इति धन्वन्तरेर्मतम् ॥**
**यथांबुजवनस्यार्कः प्रदीपो वेश्मनो यथा ।**
**प्रबोद्धयस्य प्रकाशार्थस्तथा तन्त्रस्य युक्तयः ॥**

चरकाचार्यमते तन्त्रयुक्तयः पञ्चत्रिंशद्वर्तन्ते । तद्यथा—

**पञ्चत्रिंशद्विचित्राभिर्भूषितं तन्त्रयुक्तिभिः ।**
**तन्त्राधिकरणं योगो हेत्वर्थोऽर्थः पदस्य च ॥**
**प्रदेशोद्देशनिर्देशवाक्यशेषाः प्रयोजनम् ।**
**उपदेशापदेशातिदेशार्थापत्तिनिर्णयाः ॥**
**प्रसङ्गैकान्तनैकान्ताः सापवर्गो विपर्ययः ।**
**पूर्वपक्षविधानानुमतव्याख्यानसंशयाः ॥**
**अतीतानागतावेक्षास्वसंज्ञोह्यसमुच्चयाः ।**
**निदर्शनं निर्वचनं सन्नियोगो विकल्पनम् ॥**
**प्रत्युत्सारस्तथोद्धारः संभवस्तन्त्रयुक्तयः ।**
**तन्त्रे व्याससमासाभ्यां भवन्त्येतानि कृत्स्नशः ॥**

सुश्रुताचार्यस्तु तन्त्रयुक्तयो द्वात्रिंशदित्यभिप्रैति । तद्यथा—

"द्वात्रिंशत्तन्त्रयुक्तयो भवन्ति शास्त्रे । तद्यथा— अधिकरणं योगः पदार्थो हेत्वर्थ उद्देशो निर्देश उपदेशोऽपदेशः प्रदेशोऽतिदेशोऽपवर्जो वाक्यशेषोऽर्थापत्तिर्विपर्ययः प्रसंग एकान्तोऽनैकान्तः पूर्वपक्षो निर्णयोऽनुमतं विधानमनागतावेक्षणमतिक्रान्तावेक्षणं संशयो व्याख्यानं स्वसंज्ञा निर्वचनं निदर्शनं नियोगो विकल्पः समुच्चय ऊह्यमिति" ॥

चरकोक्तासु पञ्चत्रिंशत्तन्त्रयुक्तिषु पूर्वपक्षविधानमित्येका युक्तिः । अत्र वाहटमते पूर्वपक्षो विधानमिति द्वैविध्यं परिकल्प्य तासां षट्त्रिंशत्वं प्रतिपादितम् ॥

सुश्रुताचार्यमते वर्तमानाभ्यो द्वात्रिंशत्तन्त्रयुक्तिभ्यः प्रयोजनप्रत्युत्सारोद्धारसंभवाख्याश्चतस्रो युक्तीरधिकतया योजयित्वा षट्त्रिंशत्संख्यात्वमुक्तं वाहटाचार्येण ॥

चरकन्यासकर्ता भट्टारहरिश्चन्द्रस्तु वाहटमते वर्तमानासु तन्त्रयुक्तिषु षट्त्रिंशत्सु परिप्रश्नो व्याकरणं व्युत्क्रान्ताभिधानं हेतुरिति चतस्रो युक्तीरधिकतया योजयित्वा तन्त्रयुक्तीनां चत्वारिंशत्संख्यात्वमंगीकृत्य व्याख्यातवान् ॥

अस्य ग्रन्थकर्तुर्मते तन्त्रयुक्तयः षट्त्रिंशदेव । "स्युः सारभूताः षट्त्रिंशदित्युक्तिध्वनिना पुनः । अपरेप्यभिधीयन्ते पिण्डप्रकरणादयः" इत्युक्त्वा पञ्चदश व्याख्याभेदाः, सप्त कल्पनाः, उपधालोपशून्यत्वाद्विंशतिरर्थाश्रयाः, सप्तदश ताच्छील्यादीनि च व्याक्रियन्ते ॥

## ग्रन्थकर्ता ॥

अस्य तन्त्रयुक्तिनामकग्रन्थस्य कर्ता क इति निश्चयेन वक्तुं न किञ्चिदपि प्रमाणमुपलब्धमस्माभिः । अष्टांगहृदयतन्त्रमधिकृत्य विरचिताया अभिधानमञ्जर्याः कर्तुर्भिषगार्यापरनामकस्य नारायणाख्यस्य भिषजो वंशपरंपरायां जातस्य वैद्यनाथापरनामकस्य नीलमेघवैद्यस्य तन्त्रयुक्तिविचारग्रन्थमवलोक्य केनचिद्भिषग्वरेणेदं पुस्तकं व्यरचीति ज्ञातुं पार्यते, "इत्याद्यायुर्वेदवार्द्धेर्नीलमेघेन नीरवत् । सारमादायाभिवृष्टं तदुपादीयते मया" इत्युक्तत्वादस्य ग्रन्थस्य प्रारंभे ॥

**तत्तद्दिगन्तरप्राप्त्या सन्तप्तेन मया खलु ।**
**नीलमेघपदच्छायामाश्रित्याश्वसता पुनः ॥**
**आचार्यसुन्दरोक्तानां युक्तीनां भूषणात्मनाम् ।**
**वैद्यनाथोपसृष्टानां लक्ष्यलक्षणवाग्जुषाम् ॥**
**तासां प्रायः प्रकाशानां दुर्लेखापङ्कदूषणात् ।**
**क्रियते सांप्रतं कृच्छ्रादुद्धृत्य परिमार्जनम् ॥ इति च ॥**

नीलमेघभिषजं प्रत्युपश्लोकितत्वादस्य कर्त्रा, तस्य नीलमेघस्य समन्वये जातः कश्चिद्भिषग्वरः, तच्छिष्यकोटिं प्रविष्टः कश्चिद्वैद्यवरो वा ग्रन्थमिममकरोदिति वक्तुं शक्यते ॥

**अलङ्काराष्षणवतिस्तन्त्राधिकरणादयः ।**
**इत्युक्तास्तुङ्गमान्योऽसौ पुत्रः सार्थो भवेदतः ॥**

इत्युक्तमस्मिन्नेव ग्रन्थे । कस्यचिद्भिषग्वरस्य तुंगमान्यो नाम पुत्रोऽभूत् । तस्य पठनार्थमिदं लिखितमिति च ज्ञायतेऽनन्तरोक्तेन पद्येन ॥

## ग्रन्थकर्तुर्जीवितकालः ।

ग्रन्थस्यास्य कर्ता कस्मिन् काले समजनीति वक्तुं न किंचिदप्यभिज्ञानम् ॥

अस्यादर्शभूतः कश्चिज्जराजर्जरितो ग्रन्थ एवोपलब्धोऽस्माभिरस्मदीयवयस्करागारात् । आदर्शान्तरालाभात्तमिममेकमेव ग्रन्थमवलोक्यास्य संशोधनं कृतम् । तत्र तत्र सुश्रुतवचनानि डल्हणारुणदत्तवचनान्यपि प्रकाशितानि । तान्यध्येतॄणां बुद्धिप्रबोधनाय भवेयुरिति मन्यमानाः । ग्रन्थेऽस्मिन् मतिमान्द्यादनवधानाद्वा भ्रमादिदोषः क्वचिदप्युपलभ्येत चेत् संशोधयन्तु गुणैकपक्षपातिनो विद्वांस इति प्रार्थयामो वयम् । येषां महोदयानां निकटे हस्तलिखितमादर्शान्तरं वर्तते यदि ग्रन्थस्यास्य द्वितीयसंस्करणावसरे संशोधनसौकर्यार्थं तैस्तत् प्रेषणेनानुग्रहो विधेय इति च निवेदयामः ॥

**वयस्करागारनिवासिनः शङ्करशर्मणः ।**

**कोट्टयम्**
**१-२-१९३९**

---

## द्वितीयावृत्तेः प्रस्तावना ॥

इदानीं तु तन्त्रयुक्तिनामकस्य ग्रन्थस्यास्य द्वितीयं संस्करणं प्रकाश्यते ॥

ग्रन्थेऽस्मिन् उपदेशाख्यतन्त्रयुक्तेः परं सुविस्तृतं विवरणं नासाद्यते। अध्येतॄणां सम्यक् ज्ञानाय संस्करणेऽस्मिन् अपदेशादीनां तन्त्रयुक्तीनां नीलमेघकृतं विवरणमपि तत्र तत्रायोजितम् ॥

पूर्वस्मिन संस्करणे चरकाचार्यमते तन्त्रयुक्तयः पञ्चत्रिंशद्वर्तन्त इत्युक्तं यत तत् प्रामादिकम् । चरकोक्तपाठेनैव संग्रहे तन्त्रयुक्तीनां षट्त्रिंशत्वमाचार्येण वाहटेन स्पष्टीकृत्योक्तत्वाच्च चरकमतेऽपि षट्त्रिंशत् तन्त्रयुक्तयो भवन्तीति वक्तुं शक्यते ॥

संस्करणेऽस्मिन भ्रमप्रमादादिदोषात् जातानि स्खलनानि सुधीभिः क्षन्तव्यानीति प्रार्थयामो वयम् ॥



कोट्टयम्
१-७-१९७९

शङ्करशर्मा ।

—

## विषयानुक्रमणिका ॥





॥ श्रीः ॥

## ॥ तन्त्रयुक्तिः ॥

---

गणेशवाणीव्यासानां गुरोश्च करुणावशात् ।
निरन्तरायोऽस्त्वारम्भो मदीयोऽयं मुदावहः ॥ १
तत्तद्दिगन्तरप्राप्त्या सन्तप्तेन मया खलु ।
नीलमेघपदच्छायामाश्रित्याश्वसता पुनः ॥ २
आचार्यसुन्दरोक्तानां युक्तीनां भूषणात्मनाम् ।
वैद्यनाथोपसृष्टानां लक्ष्यलक्षणवाग्जुषाम ॥ ३
तासां प्रायः प्रकाशानां दुर्लेखापङ्कदूषणात् ।
क्रियते सांप्रतं कृच्छ्रादुद्धृत्य परिमार्ज्जनम् ॥ ४
तथैवादृष्टनष्टानामेषामपि च पूरणम् ।
इति तन्त्रगुणैर्युक्तं तन्त्रदोषविवर्ज्जितम् ॥ ५
इत्येवाष्टाङ्गहृदये संग्रहे युक्तयः स्फुटाः ।
अलंकृतं युक्तिपदैः सद्रत्नैरिव काञ्चनम् ॥ ६
षट्त्रिंशतार्थदुर्गेषु भिषजां संक्रमैरिव ।
इत्याद्यायुर्वेदवार्धेर्न्नीलमेघेन नीरवत् ॥ ७
सारमादायाभिवृष्टं तदुपादीयते मया ।
अष्टाङ्गानामधिष्ठानं सुन्दरीव्यञ्जिताकृतिम् ॥ ८

संग्रहं शङ्करात्मानमिन्दुशेखरमाश्रये ।
अष्टाङ्गहृदयं साक्षादष्टाङ्गीलक्षितं शिवम् ॥ ९
सुन्दरीशक्तिसंपन्नमिन्दुप्रियमुपास्महे ।
शशिलेखावतंसौ तौ सुन्दरीपरिभासितौ ॥ १०
मृत्युञ्जयात्मकौ ग्रन्थौ भजे हृदयसंग्रहौ ।
संग्रहे युक्तिमणयो हृदयान्त गुणान्विताः ॥ ११
धार्यन्तामिह विद्वद्भिः प्रसादाय सदात्मनः ।

आत्तबुद्धिरवलोकितेश्वरात्
संघगुप्तकुलसिन्धुचन्द्रमाः ।
रामगुप्त इति वाहटाख्यया
ख्यातिमान् स भिषगाविरस्तु नः ॥ १२

लंबश्मश्रुकलापमंबुदनिभच्छायाद्युतिं वैद्यका-
नन्तेवासिन इन्दुजज्झटमुखानध्यापयन्तं सदा ।
आगुल्फामलकंचुकांचितदरालक्ष्योपवीतोज्वलत्-
कण्ठस्थागरुसारमञ्जितदृशं ध्याये हृढं वाहटम् ॥ १३

आत्रेयपूर्वनिखिलादिगुरून्महर्षी-
नार्यावलोकितगुरुं पुनरार्यताराम् ।
श्रीसंघगुप्तमपि वाहटरामगुप्त-
माचार्यसुन्दरमपि प्रणतोऽस्म्यजस्रम ॥ १४

अधीयानोऽपि तन्त्राणि तन्त्रयुक्त्यविचक्षणः ।
नाधिगच्छति तन्त्रार्थमर्थं भाग्यक्षये यथा ॥ १५
काः पुनस्ताः कियत्यश्चेत्यनुयोगेऽभिधीयते ।
तन्त्राधिकरणं योगो हेत्वर्थोऽर्थः पदस्य च ॥ १६

प्रदेशोद्देशनिर्देशवाक्यशेषाः प्रयोजनम् ।
उपदेशापदेशातिदेशार्थापत्तिनिर्णयाः ॥ १७
प्रसङ्गैकान्तनैकान्ताः सापवर्गो विपर्ययः ।
पूर्वपक्षविधानानुमतव्याख्यानसंशयाः ॥ १८
अतीतानागतापेक्षास्वसंज्ञोह्यसमुच्चयाः ।
निदर्शनं निर्वचनं नियोगोऽथ विकल्पनम् ॥ १९
प्रत्युत्सारस्तथोद्धारः संभवस्तन्त्रयुक्तयः ।
वाक्यन्यायोदधेः सारभूताः षट्त्रिंशदीरिताः ॥ २०
स्युः सारभूताः षट्त्रिंशदित्युक्तिध्वनिना पुनः ।
अपरेऽप्यभिधीयन्ते पिण्डप्रकरणादयः ॥ २१
पिण्डप्रकरणन्यासपदार्थपदकृच्छ्रकाः ।
प्रतिलोमानुलोमार्थप्रयोजनफलोद्धिताः ॥ २२
तथाधिकरणं सूत्रसमध्वजसमाख्यया ।



व्याख्याः पञ्चदश ख्याताः, कल्पनास्सप्त कीर्तिताः ॥ २३
प्रधानगुणलेशाज्ञाविभवैङ्गितभक्तयः ।
एकाधिका विंशतिः स्युराश्रया आदिलोपकः ॥ २४
मध्यलोपोऽन्तलोपश्च तथैवोभयलोपकः ।
आदिमध्यान्तलोपः स्यादुपधालोप एव च ॥ २५
वर्णोपजानं प्रकृतमृषिक्लिष्टं तथैव च ।
तन्त्रशैली तन्त्रसंज्ञा प्रकृताख्यं तथा पुनः ॥ २६
समानपरतन्त्राख्या प्रत्ययौ हेतुहैतुकौ
कार्यकारणधर्मश्च तथाद्यन्तविपर्ययः ॥ २७
शब्दान्यत्वप्रत्ययाख्यधर्मोपनयसंभवाः ।
विभवः, सप्तदश च ताच्छील्यादीनि सन्त्यथ ॥ २८

ताच्छील्यमपि सामीप्यं विकारोऽवयवोऽपि च ।
संसक्तता च तादर्थ्यं तात्स्थ्यं तद्धर्मतापि च ॥ २९
चेष्टानिमित्तता कर्मगुणयोश्च निमित्तता ।
स्थानं च मूलसंज्ञा च भावो गुणिगुणाख्ययोः ॥ ३०
साहचर्यं प्रकारश्च भूयस्त्वमिति ते गुणाः ।

लक्ष्यलक्षणमनुक्रममासां
लक्षितं स्वगुरुसुन्दरदृष्ट्या ।
वैद्यनाथ इति कल्पितनाम्ना
नीलमेघभिषजा क्रियते स्म ॥ ३१





## अथ युक्तयः ॥

### १. तन्त्राधिकरणम् ॥

तन्त्राधारोऽधिकरणं तात्पर्यं यत्र तिष्ठति ।
तन्त्राधिकरणं तद्यदधिकृत्य प्रवर्तते ॥
शास्त्रं स्थानं तथाध्यायं वाक्यं प्रकरणं च वा ।

यथा— अष्टाङ्गमधिकृत्य हृदयाख्यं सर्वं शास्त्रं प्रवृत्तम् । तथा चोक्तम्— "कायबालेत्यादि" (अ. हृ. सू. १.५) । स्थानाधिकरणं यथा— "अत्रार्थाः सूत्रिताः सूक्ष्माः प्रतन्यन्ते हि सर्वतः" इति (अ. हृ. सू. ३०, ५३) । अध्यायाधिकरणं यथा— "अथातो दिनचर्यामध्यायं व्याख्यास्यामः" इति । (अ. हृ. सू. २) प्रकरणाधिकरणं यथा—"दश मूलसिरा हृत्स्थास्ताः" इत्यादि (अ. हृ. शा. ३.१८) यावत् "इत्यवेध्यविभागार्थं प्रत्यङ्गं वर्णिताः सिराः" इति (अ. हृ. शा. ३. ३३.) । एवं वाक्याधिकरणमपि । यदधिकृत्य वाक्यं प्रवर्तते तद्वाक्याधिकरणं वेद्यम । अधिकरणं नामाधारः । यथा— "कायबालग्रहे"त्यादौ (अ.हृ.सू. १.५) । कायादीनाधारीकृत्य तत्तद्रोगोपशमनी चिकित्सा वर्तते । न

---

१ तत्वाधिकरणम् ।
तत्र यमर्थमधिकृत्योच्यते तदधिकरणम् । यथा– रसं दोषं वा । इति सुश्रुतः ।

त्ववस्थावयवभेदेन भिद्यमानानां तन्त्रस्याङ्गभूतानां कायादीनामिति संबन्ध इति तात्पर्यम् । आचार्येणापि "चिकित्सा येषु संश्रिता" (अ. हृ. सू. १. ६) इत्युक्तं च । कायचिकित्सा बालचिकित्सेत्यादि आधाराधेयसंबन्धमात्रमेव । तन्त्रमिदमातुरापेक्षमथवा अनातुरविषयम् । अनातुरविषयं तर्हि दिनर्तुचर्याकथनमनुचितमेवेति चेत् । तयोस्तु— "वयोहोरात्रिभुक्ताना"मित्यादिना (अ. हृ. सू. १. ८) । "चयप्रकोपप्रशमा" इत्यादिना (अ. हृ. सू. १२. २४) च । एकत्र कालकृतदोषापेक्षमन्यत्र त्वाहारादिकुपितदोषापेक्षम् । तस्मादुभयथाप्यातुरविषयमिदं तन्त्रम् । "इति कालस्वभावोऽय"मित्यादि (अ. हृ. सू. १२. २८) चाचार्येणोक्तम् । इत्यधिकरणम् ॥

---



## २ योगः ॥

अथ योगः पदानामेव । "रोगस्तु दोषवैषम्य"मिति (अ. हृ.सू. १. २०) । तेन रोगोऽपि रोगस्य हेतुः । यथा ज्वरो रक्तपित्तस्य । रक्तपित्तं वा ज्वरस्य इति मेघः । योगो नाम योजना । उद्देशनिर्देशयोः सूत्रभाष्ययोर्वा । यथा—"अथातोऽगविभागं शारीरं व्याख्यास्यामः" (अ.हृ.शा.३) इत्युद्दिश्याङ्गानि

---

१ योगः ।

येन वाक्यं युज्यते स योगः । यथा— "तैलं पिबेच्चामृतवल्लिनिंबहिंस्राभयावृक्षकपिप्पलीभिः । सिद्धं बलाभ्यां च सदेवदारु हिताय नित्यं गलगण्डरोगे ॥ सिद्धं पिबेदिति प्रथमं वक्तव्ये तृतीयपादे सिद्धं प्रयुक्तम् । एवं दूरस्थानामपि पदानामेकीकरणं योगः । इति सुश्रुतः ॥

विभजते । "शिरोऽन्तराधिर्द्वौ बाहू सक्थिनी च समासतः । षडङ्गमङ्गं प्रत्यङ्ग"मित्यादि (अ. हृ. शा. ३. १) युक्तिर्वा योगः । प्रतिज्ञा हेतुरुदाहरणमुपनयो निगमनमिति पञ्चविधम् । यथा—अग्निः शरीरस्थितेर्मूलमिति प्रतिज्ञा । अग्निपक्काहारे सति तत्स्थितेरिति हेतुः । "आहारात्र ह्यपक्काद्रसादयः" (अ. हृ. शा. ३. ५४) इति वचनात् । उदाहरणं दृष्टान्तः । यथा—शाल्यंकुरस्य बीजमिति । उपनयस्तस्योपनयनम् । यथा—चिकित्साशास्त्रस्य सप्रयोजनत्वसाधनाय बहुधा दृष्टान्तोपनयनं कृतवांस्तन्त्रकृत् "कस्यासिद्धोऽग्नितोयादि"रित्यादिना (अ. हृ. उ. ४०. ६८) । दृष्टान्तानां बहुत्वेन स्थापनोपनयः स्मृतः । तस्मात् सप्रयोजनमेव चिकित्साशास्त्रं प्रत्यक्षफलत्वात् । इत्युपनयः । तस्मादारंभणीयमिति प्रमाणफलोपादानद्वारेण दर्शनं निगमनम । यथोक्तं—"चतुष्पाद्गुणसंपन्ने सम्यगालोच्य योजिते । मा कृथा व्याधिनिर्घाते विचिकित्सां चिकित्सिते" (अ. हृ. उ. ४०. ७३) इति । संशयानुपपत्त्या प्रतिपादितया प्रमाणार्थफलोपसंहरणम ॥

योगो नाम युजेर्ज्ञातो योजना युक्तिरेव च ।
उद्देशनिर्देशवतो योजना सूत्रभाष्ययोः ॥
तथैव रोगदोषाख्याः कल्प्योऽयं बुद्धिमत्तया ।
प्रतिज्ञाहेतुदृष्टान्तास्तस्योपनयनं पुनः ॥
ततो निगमनं चेति योगः पञ्चविधः स्मृतः ।

---

### ३. हेत्वर्थः ॥

हेत्वर्थो नाम यदन्यत्प्रस्तावोक्तमन्यत्रापि तथैवापत्यते । यथा— "तत्रैकैकत्र शाखायां शतं तस्मिन्न वेधयेत्" । (अ. हृ. शा. ३. २०) इत्यारभ्य "अवेध्यास्सङ्कीर्णा ग्रथिताः क्षुद्राः" (अ. हृ. शा. ३. ३४) इत्यत्रैतदेभ्यो विशेषवचनेभ्योऽनुमीयते शेषा वेध्या इति । अन्यथैतानि वचनानि निरर्थकानि स्युः ॥

हेतुना सह यत्रोक्तिः स हेत्वर्थः प्रकीर्तितः ॥

---

### ४. पदार्थः ॥

पदार्थस्तु य ऐक्येऽपि भिन्नमर्थं प्रकाशयेत ।

यथा— "कोष्ठः क्रूरो मृदुर्मध्यो मध्यः" (अ. हृ. सू. १. ९) इत्यादौ कफोत्तरकोष्ठः समकोष्ठोऽपि मध्यः । अत्र मध्यपदस्य



---

३. हेत्वर्थः ।

यदन्यदुक्तमन्यार्थसाधकं भवति स हेत्वर्थः । यथा— मृत्पिण्डोऽद्भिः प्रक्लिद्यते तथा माषदुग्धप्रभृतिभिर्व्रणः प्रक्लिद्यत इति । इति सुश्रुतः ।

४. पदार्थः ।

योऽर्थोऽभिहितः सूत्रे पदे वा स पदार्थः, अपरिमिताश्च पदार्थाः । यथा— स्नेहस्वेदांजनेषु निर्दिष्टेषु द्वयोस्त्रयाणामर्थानामुपपत्तिर्दृश्यते। तत्र योऽर्थः पूर्वापरयोगसिद्धो भवति स गृहीतव्यः, यथा— वेदोत्पत्तिं व्याख्यास्याम इत्युक्ते सन्दिह्यते बुद्धिः— कतमस्य वेदस्यायमुत्पत्तिं वक्ष्यतीति, ऋग्वेदादयस्तु वेदाः । तत्र पूर्वापरयोगमुपलभ्य (विद विद्लृ इत्येतयोश्च धात्वोरनेकार्थयोः प्रयोगः) पश्चात् प्रतिपत्तिर्भवति— आयुर्वेदोत्पत्तिमयं विवक्षुरित्येवं पदार्थः । इति सुश्रुतः ।

न भेदः । अर्थतस्तु मध्य इति सम एव । कथं— "सुधाद्यै-र्वातिको रेच्यः शम्याकाद्यैस्तु पैत्तिकः । श्यामाद्यैः श्लैष्मिकोऽप्युच्चैः पथ्याद्यैः समदोषजः ॥" इति भेळकल्पोक्तत्वात् । सम-दोषकोष्ठात् कफकोष्ठस्य तावान् भेदोऽस्त्येव यावांस्तदुत्कर्षः । आचार्येणापि लाघविकत्वात् पदैक्यमङ्गीकृत्य कोष्ठस्तु त्रिविधो भवति मृदुः क्रूरो मध्यश्चेति कथितम् । अत्र विरेचनप्रस्तावो-क्त्या पित्तकोष्ठस्य प्रथमं ग्रहणम् । त्रिविध इति वचनमात्रम् । अर्थात् चतुर्विधत्वमस्यैव । अत्रापि तुशब्देन समदोषजपर्याय-मध्यकोष्ठस्याऽन्तर्भावः सूचित एव । अपि च— "समं मध्यं च तुल्यं च समानं सदृशं सदृक्" इति गोपालिकायामुक्तं च । अनेनाग्निरिव तदाश्रयः कोष्ठोऽपि चतुर्विध इत्यर्थः । केचित् तु— "पदार्थः पदभेदेऽपि न भेदः पुनरर्थतः" इति । तन्मते तु द्रव्यौषधयोः पदभेद एव, नार्थभेदः । "भिषग्द्रव्याणी' त्यादिना (अ. हृ. सू. १. २७) । "बहुकल्प"मित्यादिना (अ. हृ. सू. १. २८) च द्रव्यौषधयोरभेद उक्तः । उक्तं च तान्त्रिकैः— यस्मिन् रसादयो यच्च भौतिकीं मूर्त्तिमाश्रितम् । तद्द्रव्यं रसकल्कादिकल्पनासिद्धमौषधम् ॥ एतावानवस्थाविशेषः । एवमन्यत्र "शमनं कोपन"मित्यादिना (अ. हृ. सू. १. १६) तयोरेव भेदाभासः । ऊक्तं ह्याचार्येणापि— "द्विविधमौषधं ऊर्जस्करं रोगघ्नं च । ऊर्जस्करमपि द्विविधम्, रसायनं वाजीकरं च ॥ रोगघ्नमपि द्विविधम्, रोगस्य प्रशमनमपुनर्भा-वकरं च । तत् पुनर्द्विविधम्, द्रव्यमद्रव्यं च । द्रव्यं त्रिविधम्, भौममौद्भिदं जङ्गमं चेति । तेषु तद्वक्ष्यमाणलक्षणं

हेमादिलवणांतमेतत् प्रायेण भौमम् । औद्भिदं पुनः वनस्पति-वानस्पत्यवीरुदोषधिभेदेन चतुर्विधं भवति । तत्र फलिनो वनस्पतिः, पुष्पफलवान् वानस्पत्यः, वल्लीगुल्मो वीरुत्, फलपाकान्ता चौषधीति । जङ्गमोद्भवं मधुघृतादि । अद्रव्यं पुनरुपवासादिरिति" (अ. सं. सू. १२) । तस्मादनयोर्न्न भेद इति मेघः । पदार्थो नाम पदेनार्थोवगम्यते । यथा— द्रव्यमिति पदं तस्यार्थो भूजलादिः । गुण इति पदं तस्यार्थो गुर्वादिः ।

पदार्थोऽपि च भेदेऽपि न भेदः पुनरर्थतः ।
पदेन योऽर्थो ज्ञायेत यथा गुर्वादयो गुणे ॥

---

५. प्रदेशः ॥

प्रदेशः क्वचिदुक्तानामन्यत्रोक्तैः समेतता ॥

"कालार्थे"त्यादौ (अ. हृ. सू. १. १९) कालः शीतोष्णवर्ष-लक्षणः । अर्थाः शब्दादय इन्द्रियार्थाः । कर्म कायवाङ्मनो-भेदेन परत्र चेह वा कृतम । तेषां हीनयोगः नैव वा । अति-योगोऽतिमात्रः । मिथ्यायोगो विपरीतलक्षणः । ते तु वाता दिसमवेता रोगकारणं भवन्ति । वातादयोऽपि हीनयोगादि-समवेता एव । अतः खलु आचार्यस्य "कालार्थकर्मे"त्यादिश्च "दोषा एव ही"त्यादिश्च (अ. हृ. सू. १२. ३२) रोगैककारण-मित्युक्तिवशात् तयोरेकमिति यत् तदुभयमपि समवेतमेव

---

५. प्रदेशः ।

प्रकृतस्यातिक्रान्तेन साधनं प्रदेशः । यथा— देवदत्तस्यानेन शल्यमुद्धृतं तस्माद्यज्ञदत्तस्याप्ययमेवोद्धरिष्यतीति । इति सुश्रुतः ॥

रोगकारणं न पृथक् कारणमित्यर्थः । अतो रोगकारणस्य वातादिकोपस्य कालादिहीनयोगादयः प्रधानकारणमिति कारणे कार्योपचारः । इति मधुः । प्रदेशो नाम येषामर्थानामतिबहुत्वात् साकल्येनाभिधानाशक्यत्वात् स्तोकमात्रमुच्यते । यथा— 'इति द्रवैकदेशोयं यथास्थूलमुदाहृतः'' (अ. हृ. सू. ५. ८४) इति ॥

प्रदेशस्तोकमात्रोक्तिरिति केचित् प्रचक्षते ।

इति प्रदेशः ॥

---

६. उद्देशः ॥

उद्देशः समवायोक्तिरिति प्राहुर्मनीषिणः ।

यथा— सर्वथा वेगधारणं न कार्यमिति प्रतिपादनाय लाघविकेनापि सर्वानुग्राहकेणाचार्येण 'वेगान् न धारये''दित्यादौ (अ. हृ. सू. ४. १) तत्वमाकांक्षाविषयमुद्दिष्टम् । इति मधुः । उद्देशो नाम संक्षेपाभिधानम् । यथा— वायुः पित्तं कफश्चेत्यादि(अ. हृ. सू.१. ६) ॥ इत्युद्देशः ॥

---

७. निर्देशः ॥

निर्देशो नाम तस्यैव विस्तरोक्तिर्यथोदिता ।

"तत्र रूक्षो लघुः शीतः खरः सूक्ष्मश्चलोनिलः'' (अ.हृ.सू.१.६)

---

६. उद्देशः ।

समासकथनमुद्देशः । यथा— शल्यमिति । इति सुश्रुतः ।

७. निर्देशः ।

विस्तरवचनं निर्देशः । यथा— शारीरमागन्तु चेति । इति सुश्रुतः ।

इत्यरुणः । निर्देशः सोऽप्यनुगुणः पूर्वस्यानुक्रमश्च यः । यथा— अधोवातवेगधारणे कृते गुल्मादयो जायेरन् । एवं विड्रोधादिकेऽपि विज्ञेयम् । अधोवातस्य रोधेनेत्यादि निर्दिष्टं पूर्वबातेत्यनुद्दिश्य । अधोवातस्येति विशेषेण ग्रहणं पश्चादुद्गारवातविवक्षयेति बोद्धव्यम् ।

उद्देशनिर्देशकयोरन्योन्यापेक्षिता भवेत् ।
यत्तदोरिव नित्यत्र शास्त्रे सर्वत्र सर्वदा ॥
प्राक्संक्षेपेण कथनमुद्देश इति कीर्त्तितम् ।
निर्देशो नाम तस्यैव विस्तरोक्तिरुदाहृतः ॥

इति निर्देशः ॥





## ८. वाक्यशेषः ॥

वाक्यशेषो नाम यस्मिन् सूत्रे लाघविकेनार्थात् गम्यमानमनुक्तं पूरणार्थमध्याह्रियते । यथा— "तत्र खात् खानि देहेऽस्मिन्" (अ. हृ. शा. ३. ३) इत्यत्र भवन्तीति वाक्यशेषः । "आप्या जिह्वा रसक्लेदा" (अ. हृ. शा. ३. ४) इत्यत्र भवार्थे तद्धितग्रहणात् । इत्यरुणः । वाक्यशेषो विशिष्टार्थदायिनी वाक्यलक्षणा । यथा— रोगानुत्पादनीयमित्यनेन रोगोपशमनीयोऽयमध्याय इति लक्ष्यते । अन्यथा— "अनुत्पत्यै समासेन

---

८ वाक्यशेषः ।

येन पदेनानुक्तेन वाक्यं समाप्येत स वाक्यशेषः । यथा— शिरःपाणिपादपार्श्वपृष्ठोदरोरसामित्युक्ते पुरुषग्रहणं विनापि गम्यते पुरुष एवोक्त इति । इति सुश्रुतः ।

विधिरेष प्रदर्शितः" (अ. हृ. सू. ४. ३४) इत्यादेर्वाक्यस्यानुचितत्वादेव । किं च "धारयेत्तु सदा वेगान्" (अ. हृ. सू. ४. २४) इत्ययमप्यनुचित एव । इति मेघः । इति वाक्यशेषः ॥

---

## ९. प्रयोजनम् ॥

प्रयोजनं नाम यदर्थं शास्त्रादि प्रवर्तते । यथा— "आतङ्कपङ्कमग्नानां हस्तालंबो भिषग्जितम्" (अ.हृ.उ. ४०.६४) इति । अनेन प्रयोजनेन चिकित्साशास्त्रमध्येयमित्यर्थ इत्यरुणः । प्रयोजनमनेकार्थे यत स्यात् पदनिवेशनम् । यथा— "वायुः पित्तं कफ"श्चेत्यादिना (अ. हृ. सू. १. ६) पदनिवेशनेन ते वातादयः पृथगपि दोषाः । चशब्दात् समवेता अपि दोषाः । समासत इति आप्तोदितं विस्तरतोऽपि दोषा इति । अनेन प्रकारेण रजस्तमश्चेत्यादिना तयोरपि दोषत्वम् । त्रय इति वातादिभेदानामपि दोषत्वं लक्षितमेवेत्यर्थसिद्धिः । इति मेघः । इति प्रयोजनम् ॥

—0—

## १०. उपदेशः ॥

उपदेशो नाम आप्तवचनम् । यथा—

"स्नेहक्लिन्नाः कोष्ठगा धातुगा वा

---

१० उपदेशः ।

एवमित्युपदेशः । यथा— "तथा न जागृयाद्रात्रौ दिवास्वप्नं च वर्जयेत्" इति । इति सुश्रुतः । किं कुर्यादित्युपदेश इत्यर्थः । नन्वुपदेशनियोगयोः

स्रोतोलीना ये च शाखास्थिसंस्थाः ।"

(अ. हृ. सू. १७.२९) इत्यादि इत्यरुणः ।

उपदेश इदं चेदमेवं तदिति कल्पना ।

"यस्माद्रूक्षो यवः स्वादुर्गुरुरप्यनिलप्रदः ॥

दीपनं शीतमप्याज्यं बस्तोष्णाप्यग्निसादनी ।

कटुपाकोऽपि पित्तघ्नो मुद्गो माषस्तु पित्तलः ॥

स्वादुपाकोऽपि चलकृत् स्निग्धोष्णं गुरु फाणितम् ।"

(अ सं सू १७) इत्यादिना आचार्येणैव प्रतिपादितः । प्रभावापरनामा द्रव्यशक्तिरितीन्दुना प्रतिज्ञातः । इति मेघः । आप्तवागुपदेशो हि सर्वैरित्यवगम्यते । इत्युपदेशः ॥

—0—



## ११ अपदेशः ॥

अपदेशस्तु हेतूक्त्या स्वप्रतिज्ञास्थिरीकृतिः ।

[अपदेशस्तु कण्ठोक्तं वाक्यमर्थेन दर्शयेत् ॥

---

को भेदः? उच्यते, प्रायिक उपदेशः । यथा रात्रौ न जागृयादिति प्रायिकत्वेनोपन्यस्तं, कफाद्यभिभूते तु तत्र रात्रिजागरणस्यापि शस्तत्वात ; दिवा न स्वापं कुर्यादित्यपि प्रायिकम् । ग्रीष्मे तृष्णाद्यन्वये च दिवास्वापस्योचितत्वात् । नियोगश्चाप्रायिकः । यथा पथ्यमेव भोक्तव्यमिति । यद्यपि "ज्वरितोऽहितमश्नीयाद्यदि चास्यारुचिर्भवेत्" इत्यादिना अपथ्यभोजनस्यावकाशः, तथापि तदानीमपथ्यस्यैव पथ्यत्वमिति नियोगस्य व्यभिचारो नास्ति । (इति डल्हणः) ॥

११ अपदेशः ।

अनेन कारणेनेत्यपदेशः । यथोपदिश्यते— मधुरेण श्लेष्माभिवर्द्धत इति । इति सुश्रुतः ।

यथा— "उष्णोदकोपचारी स्यात्" (अ.हृ.सू. १६.२६) इत्यादौ शीतोदकं न स्पृशेदिति । व्यवायं न सेवेत । दिवा न स्वप्यात् । इत्यादौ पुनरहःस्वप्ननिषेधस्तु दिवास्वप्नोचितानामपि स्नेहविषये निषेधप्रतिपादनाय ॥] इत्यपदेशः ॥

—0—

१२ अतिदेशः ॥

अतिदेशस्तु यत्किञ्चिदर्थजातमुदीर्य च ।
• एवमन्यदपि ज्ञेयमिति स्थापनमुक्तिभिः ॥
[अतिदेशस्तु पूर्वोक्तन्यायस्यान्यानुषङ्गिता ॥

यथा— "रोगाः सर्वेऽपि जायन्ते" (अ. हृ. सू. ४. २२) इत्यादौ वेगधारणानुषङ्गेण वेगोदीरणस्य तस्य वा ग्रहणे सर्वरोगजनकप्राधान्यं सूचितम् । उदीरणं धारणं च प्रयत्नविशेषः । अत्र बहुवचननिर्देशो वेगलक्षितान् वातादीनुद्दिशति ॥] इत्यतिदेशः ॥

—0—

१३. अर्थापत्तिः ॥

अर्थावगतिरेवार्थापत्तिरित्यभिधीयते ।
[अर्थापत्तिः सहोक्तेभ्योऽप्येकस्यार्थोऽन्यथापतेत् ॥

यथा— "आमविष्टंभयोः कोष्णं निष्पिपासोऽप्यपः पिबेत् ।"

---

१२ अतिदेशः ।

प्रकृतस्यानागतस्य साधनमतिदेशः । यथा— अनेनास्य वायुरूर्ध्वमुत्तिष्ठते तेनोदावर्तः स्यादिति । इति सुश्रुतः ।

१३ अर्थापत्तिः ।

यदकीर्तितमर्थादापद्यते सार्थापत्तिः । यथौदनं भोक्ष्ये इत्युक्तेऽर्थापन्नं भवति नायं पिपासुर्यवागूमिति । इति सुश्रुतः ।

(अ. सं. सू. ६.) इत्यनेन विदग्धे दुष्टपित्तोपशमनाय पिपासितस्यैव शृतशीतोदकं दद्यादित्यर्थादापतितम् । उष्णशीतस्वादुपाकत्वं च शीतवीर्यत्वं च साधारणमेव ।

"पाके स्वादु हिमं वीर्ये तदुष्णमपि योजितम् ।
तस्माद्योगपानेन लाघवान्न वियोजयेत् ॥" (अ. सं. सू. ६)

इत्युक्तत्वात् । लाघवान्न वियोजयेदित्यस्य स्वल्पत्वं तस्य न चापतेयमितीन्दुनापि व्याख्यातम् ॥]। इत्यर्थापत्तिः ॥

---

## १४. निर्णयः ॥

निर्णयः संशये प्राप्ते तदपाकरणं वचः ।

[निर्णयः स्थापयेदर्थमनेकविधमेकधा ॥ यथा— "वीर्यं तु केचित् गुरुलघुस्निग्धरूक्षमन्दतीक्ष्णशीतोष्णभेदादष्टविधमाहुः । अपरे पुनर्बहुवीर्यवादिनः पठन्ति—

वीर्यं द्रव्यस्य तज्ज्ञेयं यद्योगात् क्रियते क्रिया
नावीर्यं कुरुते किञ्चित् सर्वा वीर्यकृता हि सा ॥" इति

(अ. सं. सू. १७) । तैरपि चैवमतिप्रकृष्टशक्तियुक्तानामशेषौषधगुणसारभूतानामष्टानामेव गुर्वादीनां वीर्यसंज्ञा विशिष्टाम्नायविहितापि लौकिकीति समुद्भाव्यते । तथा हि । तया रसविपाकगुणान्तरविजयिनो भूयांसश्च वरिष्ठाश्च गुणाः संगृहीताः ।

---

१४ निर्णयः ।

तस्य (पूर्वपक्षस्य) उत्तरं निर्णयः । यथा— शरीरं प्रपीड्य पश्चादधो गत्वा, वसामेदोमज्जानुविद्धं मूत्रं विसृजति वात एवमसाध्या वातजा इति । यथा चोक्तं— कृत्स्नं शरीरं निष्पीड्य मेदोमज्जावसायुतः । अधः प्रकुप्यते वायुस्तेनासाध्यास्तु वातजाः । इति सुश्रुतः ।

विशेषवृत्त्या च तत्र द्रव्यस्वरूपकथने व्यवहारः प्रवर्तितो भवति । अत एव सर्वातिशायी द्रव्यस्वभावः प्रभाव इत्याम्नातः । सत्यपि च क्रियानिवर्तनसामान्ये तद्विपरीता रसादयो वीर्याख्यया प्रभावसंज्ञया वा न परामृश्यते। अन्ये तु गुर्वादीनामग्नीषोमात्मकत्वादादानविसर्गविभागेन कालस्य चोष्णशीतात्मकत्वाद् द्विविधमेवामनन्ति । एवं चाहुः—

नानात्मकमपि द्रव्यमग्नीषोमौ महाबलौ ।
व्यक्ताव्यक्तं जगदिव नातिक्रामति जातुचित् ॥

तत्रोष्णं दहनपचनस्वेदनविलयनानिलकफशमनानि करोति । शीतं ह्लादनस्तंभनजीवनरक्तपित्तप्रसादनादीनि करोति । (अ. सं. सू. १७) । इति वीर्यद्वैविध्यमाचार्येण स्थापितं "उष्णशीतगुणोत्कर्षात्" (अ. हृ. सू. १. १७) इत्यादिना वाक्येन ।] इति निर्णयः ॥



—0—

## १५. प्रसङ्गः ॥

प्रागुक्तस्य सतोऽर्थस्य संबन्धेन च केनचित् ।
पुनरप्यभिधानं स प्रसङ्ग इति कीर्तितः ॥

---

१५ प्रसंगः ।

प्रकरणान्तरेण समापनं प्रसंगः । यथा— प्रकरणान्तरितो योऽर्थोऽसकृदुक्तः समाप्यते स प्रसंगः । यथा— महाभूतशरीरिसमवायः पुरुषस्तस्मिन् क्रिया सोऽधिष्ठानमिति वेदोत्पत्तावभिधाय; भूतचिन्तायां पुनरुक्तं यतोऽभिहितं पञ्च महाभूतशरीरिसमवायः पुरुष इति स खल्वेष कर्मपुरुषश्चिकित्सायामधिकृत इति । इति सुश्रुतः ।

[प्रसङ्गः पूर्वमुक्तानां भूयोऽपि प्रतिपादनम् ॥
यथा— "आमाशयं प्रविश्याममनुगम्य" (अ. हृ. नि. २. ४) इत्यादिना प्रोक्तमर्थं "आमाशयस्थो हत्वाग्निं" (अ.हृ.चि.१.१) इत्यदिना भूयोऽपि प्रतिपादितवानाचार्यः । तत्र तु एवंभूतस्य ज्वरस्य लङ्घनं कार्यं नेतरस्येति "शुद्धवात" (अ.हृ.चि.१.२२) इत्यादिना वक्ष्यति ।] इति प्रसङ्गः ॥

—0—

## १६. एकान्तः ॥

एकान्तो नाम यत् पक्षमेकमेव समाश्रयेत् ।
[एकान्त एवमेवैष नान्यथेति व्यवस्थितिः ॥
यथा— अष्टादशाष्टादशकान् वस्तीनां यो निषेवते ।
विधिना ना यथोक्तेन स भवेदरुजोऽजरः ॥ (अ. सं. सू. २८) इत्यत्र कर्मकालयोगाख्यानां स्नेहवस्तीनां यो निषेवते । अष्टादशकान् विधिना "प्राक्स्नेह एकः पञ्चान्ते" (अ. हृ. सू. १९. ६३) इत्यादिना ग्रन्थोक्तप्रकारेणाष्टादशपर्यायान् सेवेत । इत्यनेन क्रमेणानुवासनानि त्रीणि शतानि चतुर्विंशत्यधिकानि भवन्ति । इत्येष कर्मवस्तिः ।
सौश्रुते तूक्तमष्टादशविधत्वमस्य—
दत्तस्तु प्रथमो वस्तिः स्नेहयेद्वस्तिवंक्षणौ ।
सम्यग्दत्तो द्वितीयस्तु मूर्द्धस्थमनिलं जयेत् ॥
बलं वर्णं च जनयेत् तृतीयोऽथ विशेषतः ।

---

१६ एकान्तः ।

यदवधारणेनोच्यते स एकान्तः । यथा— त्रिवृद्विरेचयति मदनफलं वामयतीति । इति सुश्रुतः ।

चतुर्थः स्नेहति रसं रक्तं स्नेहति पञ्चमः ॥
मांसं स्नेहति षष्ठस्तु मेदः स्नेहति सप्तमः ।
अष्टमो नवमश्चैवमस्थिमज्जानमेव च ॥
तथा शुक्राश्रयान् दोषान् नवापि नव वस्तयः ।
(सु. चि. ३७. ७१-७४)

वातादिकुणपग्रन्थिपूयक्षीणमलाह्वयम् ।
बीजासमर्थं रेतोऽस्रं स्वलिङ्गैर्दोषजं वदेत् ॥ (अ. हृ. शा. १.१८) इत्याद्यनेन शुक्राश्रगा नव दोषा ज्ञातव्याः । मलशब्देन मूत्रशकृद्गन्धावुक्तौ । इत्यष्टादशकम् । एवं वस्तयस्त्रिंशदीरिताः । ना सेवेत इति पुंस्त्रियोर्ग्रहणम् । अन्यत्रापि—

दद्यान्निरूहान्तरितांस्त्रीन्नवाष्टादशैव तु ।
स्नेहवस्तिक्रमो ह्येष शुक्ररक्तप्रसादनः ॥

इत्यत्र त्रीन्नवेति द्वादशास्थापनानि । अष्टादशेति स्नेहवस्तयः । सान्वासनानीति सहशब्दः प्राधान्ये सेन्द्राः सुरा इव । अथ कालवस्तेस्तु "कालः पञ्चदश" (अ. हृ. सू. १९. ६४) इत्यादिनोक्तप्रकारेण शतम् । अशीति स्नेहा नवतिरास्थापनानीति सर्वं सप्तत्यधिकं शतद्वयम् । अत्र वस्तिरिति निरूहः । योगवस्तेस्तु "योगोऽष्टौ वस्तयोऽत्र" (अ. हृ. सू. १९. ६४) इत्यादिनोक्तप्रकारेण नवति स्नेहाः पञ्चाशच्चत्वार्यास्थापनानि चतश्चत्वारिंशदधिकं शतं विद्यात् । तेन मरुच्छमं न प्रधानम् । कर्मादीनामुत्कृष्टदोषनिर्हरणार्थम् । अङ्गभूतान्यास्थापनानि यतः ।

स्नेहेन रौक्ष्यं लघुतां गुरुत्वा-
दौष्ण्याच्च शैत्यं पवनस्य हत्वा ।

तैलं दधात्याशु मनःप्रसादं
स्नेहं बलं वर्णमतीव पुष्टिम् ॥

इति वचनात्। तत्रैव—

अन्यजन्मकृतं कर्म दैवं पौरुषमैहिकम् ।
विद्यात्ते कर्मणि त्रेधा श्रेष्ठमध्यावरत्वतः ॥

इत्याद्युक्तन्यायेन ।

दैवपौरुषकर्मभ्यामुत्कृष्टाभ्यामुदीरितान् ।
व्याधीन् जित्वा बलं कुर्यात् कर्मवस्तिस्ततः स्मृतः ॥
ताभ्यामेव च मध्याभ्यामथानियतकालजान् ।
व्याधीन् जित्वा सुखं कुर्यात् कालवस्तिस्ततः स्मृतः ॥
अथाभ्यामेवावराभ्यां यो व्याधीन् विनिहत्य तान् ।
देहं सुखायुषा युंज्याद्योगवस्तिस्ततः स्मृतः ॥]

इति एकान्तः ॥



—0—

## १७. नैकान्तः ॥

नैकान्तो नाम यत् पक्षस्यान्यस्यानवधारणम् ।
[एवं स्यादथवा नैवमिति नैकान्त ईरितः ॥

यथा— "शीते वसन्ते च" (अ. हृ. सू. १९. २१) इत्यादि। शीतवसन्तयोर्हेमन्तशिशिरवसन्तेषु दिवानुवासयेत् । अन्यदा ग्रीष्मवर्षाशरत्सु रात्राविति सिद्धम् । केचिच्छीते वसन्ते

---

१७ अनेकान्तः ।

क्वचित्तथा क्वचिदन्यथेति यः सोऽनेकान्तः । यथा— केचिदाचार्या ब्रुवते द्रव्यं प्रधानं, केचिद्रसं, केचिद्वीर्यं, केचिद्विपाकमिति । इति सुश्रुतः ।

च रात्रावन्यदा दिवेति । अन्ये पुनः केचिच्छब्दस्य काकाक्षिन्यायमापाद्य केचित् सर्वदा रात्राविति । केचित्तु तत इति रात्र्युत्तरकालस्यान्यदात्वमापाद्य सर्वदा दिवेति । तेन शीते वसन्ते च दिवा ग्रीष्मवर्षाशरत्सु रात्रावित्येकः पक्षः । सर्वदा रात्रावित्येकः पक्षः । सर्वदा दिवेत्यन्ये । इति पक्षत्रयम् । दिवापक्ष एवाह—

न रात्रौ प्रणयेद्बस्तिं दोषोत्क्लेशो हि रात्रितः ।
स्नेहवीर्यमतः कुर्यादाध्मानं गौरवं ज्वरम् ॥
अह्निः स्थानस्थिते दोषे वह्नौ चान्नरसान्विते ।
स्फुटस्रोतोमुखं देहं स्नेहौजः परिसर्पति ॥

अन्यस्तु—

न दिवा योजयेद्बस्तिं दिवास्वप्नप्रसङ्गतः ।
दिवास्वप्नो हि कुरुते कफपित्तात्मकान् मलान् ॥
शीते वसन्ते च दिवानुवास्यो
रात्रौ शरद्ग्रीष्मघनागमेषु ।
तानेव दोषान् परिरक्षता ये
स्नेहस्य पाने परिकीर्तिताः प्राक् ॥

इति । स्नेहपानदोषाश्च—

अत्युष्णे तु दिवा पीतो वातपित्ताधिकेन वा ।
मूर्छां पिपासामुन्मादं कामिलां च समीरयेत् ॥
शीते रात्रौ पिबन् स्नेहं नरः श्लेष्माधिकोऽपि वा ।
आनाहमरुचिं शूलं पाण्डुतां च समृच्छति ॥

आचार्योऽपि मतमिदमङ्गीकृत्य शिशिरवसन्तयोर्दिवा (अ. सं.

सू. २८) इत्यादिना पूर्वमुक्तवान् । पुनश्च दोषानुसारेणाह—

अल्पपित्तकफं रूक्षं भृशं वातरुजार्द्दितम् ।
भुक्तं जीर्णाशनं कामं रात्रावप्यनुवासयेत् ॥

(अ. सं. सू. २८) । भुक्तमिति जीर्णाशनं भुक्तम् । अन्यथा—

अभुक्ते रिक्तकोष्ठस्य प्रयुक्तमनुवासनम् ।
सरदूरगसूक्ष्मत्वैः क्षिप्रमूर्ध्वं प्रपद्यते ।
तेन वायोर्ज्जयो न स्याद्वातधामन्यतिष्ठता ।
कायाग्नेराशु नाशश्च विशेषादनिवर्तनात् ॥
भुक्तवाननुवास्योऽस्मान्न निरूह्यस्तु भुक्तवान् ।
निरूहश्च समीरश्च तीक्ष्णवेगावुभावपि ॥
तावन्न मूर्च्छितौ तीक्ष्णावधोऽन्नेन सहागतौ ।
ऊर्ध्वं वा शकृता सार्द्धं संस्थितौ कोष्ठ एव वा ॥
समलाहारविष्टब्धौ हरतामाशु जीवितम् ।

अवेक्ष्य वा दोषानीति चाचार्यपक्षः ।] इति नैकान्तः ॥

---

१८. अपवर्गः ॥

अपवर्गस्तु साकल्यनोद्दिष्टस्यैकदेशतः ।
पुनस्तस्यापकर्षोऽयं निर्द्दिष्टः स मनीषिभिः ॥
[अपवर्गस्त्वनौचित्यादितरोक्त्यपवर्जनम् ॥

यथा— "रसाः स्वाद्वम्ल" (अ. हृ. सू. १. १४) इत्यादिना रस-षट्कमुक्तमाचार्येण । असंख्येया रसा इति काङ्कायनः ।

---

१८ अपवर्गः ।

अभिव्याप्यापकर्षणमपवर्ज्जः । यथा— अस्वेद्या विषोपसृष्टा अन्यत्र कीट-विषादिति । इति सुश्रुतः ।

एको रस इति भद्रकाप्यः । तत्पक्षास्त्वेवमाहुः—

मधुरस्कन्धनिर्द्दिष्टघृततैलगुळादिषु ।
रसास्वादादिभेदेन रसषट्कं न युज्यते ॥
अस्तु भेदादसंख्यत्वमैक्यं वास्वादलक्षणात् ।
भूतोत्कर्षापकर्षेण भेदो योऽल्पेन कथ्यते ॥
सङ्कीर्णत्वात फले चासौ तुल्यत्वान्न विवक्ष्यते ॥
गुर्वादीनां विशेषेऽपि स्वजातेरनतिक्रमात् ।
संख्याभेदो यथा नास्ति रसानामपि स क्रमः ।
दृष्टं मुखोपलेपादि यत् सर्वेषु घृतादिषु ॥
न त्र तद्गुडाडिमाद्येषु षड्वातो रसाः स्मृताः ।
आनन्त्यैकत्वयोश्च स्यान्न विचित्रार्थतन्त्रणम ॥ (अ. सं. सू.१७) इत्यनेन नेतरापवर्ज्जनेन "रसः खल्वाप्यः प्रागव्यक्तश्च । स षड्तुकत्वात् कालस्य महाभूतगुणैर्न्यूना तरिक्तैः संसृष्टो विषमं विदग्धः षोडा पृथग्विपरिणमते मधुरादिभेदेन ।" (अ. सं. सू. १८)

क्रमेण तिक्तः शिशिरे कषायो
वसन्तकाले कटुको निदाघे ।
अम्लोऽथ वर्षासु पटुस्तदन्ते
स्वादुर्हिमे चेत्युदभावि भूतैः ॥

इत्यादिना च रसषट्कत्वं स्थापितमाचार्येण इतरापवर्जितम् ।] इति अपवर्गः ॥

—

## १९. विपर्ययः ॥

विपर्ययो लक्षणाख्या ह्युपदिष्टविपर्ययात् ।
[उक्तार्थवैपरीत्येन लक्षणं स्याद्विपर्ययः ॥

यथा— "ज्वरोपद्रवतीक्ष्णत्वं" (अ. हृ. नि. २. ५४) इत्यादिना सामज्वरलक्षणं प्रदर्श्य तद्विपर्यासेन पक्वज्वरलक्षणं प्रदर्शितम् । तत्र तु सप्तरात्रमिति लक्षणान्तरकथनं तदर्वागपि पक्वज्वरलक्षणं यदि न प्रतिवक्तव्यम् । "सप्ताहेनैव पच्यन्ते सप्तधातुगता मलाः" (च. चि. ३. २७६) इति वचनात् सप्ताह एव पक्वलक्षणमङ्गीकार्यम् । "चिरेणापि हि पच्यन्ते सन्निपातज्वरे मलाः ।" इति वचनात् सप्ताहादूर्ध्वमप्यामलक्षणं चेत् तदा पाचनकषायः कल्पनीय इति तात्पर्यम् ॥] इति विपर्ययः ॥



---

## १९ a. अविपर्ययः ॥

[केचिदत्र सन्धिविशेषादकारमापाद्याविपर्यय इत्याहुः । तत्पक्षे तु— अपेतविपरीतार्थमविपर्ययमादिशेत् ।

यथा—

मारुते लवणं सर्पिः पित्ते केवलमिष्यते ।
वैद्यो दद्याद्बहुकफे क्षारत्रिकटुकान्वितम् ॥

इति (अ. सं. सू. २५)

---

१९ विपर्ययः ।

यद्यत्राभिहितं तस्य प्रातिलोम्यं विपर्ययः । यथा— कृशाल्पप्राणभीरवो दुश्चिकित्स्या इत्युक्ते विपरीतं गृह्यते दृढादयः सुचिकित्स्या इति । इति सुश्रुतः ।

न सर्पिः केवलं पित्ते पेयं सामे विशेषतः ।
सर्वं ह्यनुव्रजेद्देहं हत्वा संज्ञां च मारयेत् ॥

(च. सू. १३. ७४) इत्यनेन विरोध इति । सत्यं तन्न । स्नेहपाने विचारणा वाच्छपानमिति द्विधा प्रयोगः । "युक्त्यावचारयेत् स्नेहं भक्ष्याद्यन्नेन" (अ. हृ. सू. १६. १४) इत्यादिना प्रोक्ता विचारणा । अच्छस्तु—

यथोक्तहेत्वभावाच्च नाच्छपेये विचारणा ।
स्नेहस्य कल्पः स श्रेष्ठः स्नेहकर्माशु साधनात् ॥

(अ. हृ. सू. १६. १६) इति द्विविधम् । अल्पमात्रं चार्यत इति चारणा । अस्याच्छपेयस्य मात्राभेदोऽस्ति ।

"द्वाभ्यां चतुर्भिरष्टाभिर्जीर्यन्ति याः क्रमात् ।
ह्रस्वमध्योत्तमा मात्रास्ताः" (अ. हृ. सू. १६. १८) इति

कल्पिताः । "ह्यस्तने जीर्ण एवान्ने स्नेहोऽच्छः शुद्धये बहुः" (अ.हृ.सू. १६. १९) इत्युत्तममात्रस्याच्छपेयस्यावस्था कल्पिता । "शमनः क्षुद्वतोऽनन्नः" (अ. हृ. सू. १६. १९) इत्यादिना च मध्यह्रस्वयोः कल्पिता । स बृंहणः—

सभक्तोऽल्पो हितः स च ।
बालवृद्धपिपासार्तस्नेहद्विण्मद्यशीलिषु ।
स्त्रीस्नेहनित्यमन्दाग्निसुखितक्लेशभीरुषु ।
मृदुकोष्ठाल्पदोषेषु काले चोष्णे कृशेषु च ॥

(अ. हृ. सू. १६. २१) किं च—

स्नेहः प्राग्भोजनात् कुर्यादूरुजङ्घाकटीबलम् ।
वेगानुलोम्यमारोग्यमधःकायगदक्षयम् ॥

मध्ये बृहत्वाग्निबलस्थिरताकुक्षिरुक्छमान् ।
इन्द्रियस्थिरतामूर्ध्वमूर्द्धजत्रुगदक्षयम् ॥ (अ. सं. सू. २५)

तेष्वपि दोषबलादीन्यवेक्ष्य "मारुते लवणं सर्पिः पित्ते केवलमिष्यते" (अ. सं. सू. २५) इत्यस्य सभक्तस्य यामद्वयजरणलक्षणमात्रस्य केवलस्याच्छपानस्य विषयत्वम् । इन्दुनापि केवलस्याच्छं बहु चेति व्याख्यातम् । तदच्छं पित्तोद्रिक्तस्य स्वभावत एव तीक्ष्णाग्नेः शुद्धये न पेयमेव । तथा सति—

स्नेहेन पैत्तिकस्याग्निर्यदा तीक्ष्णतरीकृतः ।
स्नेहमाशु जरां नीत्वा पुनरोजोऽभितश्चरन् ॥
उदीरयेत सोपसर्गां पिपासामस्य बाधिकाम् ।
सोऽसूंस्त्यजेद्यद्युदकं न पिबेदाशु शीतळम् ॥
शीतसेकावगाहादींश्च तृष्णापीडितो भजेत् ।
स्नेहाग्निना दह्यमानः स्वविषेणेव पन्नगः ॥

(अ. सं. सू. २५) इत्युक्तत्वात् । सामे विशेषतोऽच्छं न पेयम् । यदा तु—

अजीर्णे बलवत्यां तु शीतैर्दिह्याच्छिरोमुखम् ।
छर्दयेत् तदशान्तौ वा पीत्वा शीतोदकं पुनः ॥
रूक्षान्नमुल्लिखेद्भुक्त्वा तादृश्यां तु कफानिले ।
समदोषश्च निश्शेषं स्नेहमुष्णांबुनोद्धरेत् ॥

(अ.सं.सू.२५) तस्मात् पित्तकृतैः पित्तोद्रेके रोगे काले तीक्ष्णाग्नेः शुद्धये बहुमात्रमच्छं न पेयम् । तस्य तु योग्याः—

महादेहानलबलक्षुत्तृट्क्लेशसहिष्णुभिः ।
गुल्मोदावर्तवीसर्पसर्पदंशाभिपीडितैः ॥
उन्मत्तैः कृच्छ्रमूत्रैश्च महती शीघ्रमेव सा ।

सर्वमार्गानुसारेण जयेद्व्याधीन् सुयोजिता ॥
(अ. सं. सू. २५) इत्यत्र पैत्तिको न परिगृहीतः । तस्य तु स्नेहपरिहारासहिष्णुत्वात् बृंहणं शमनं शस्तम् । अथवा "ताभ्यश्च ह्रसीयसीं कल्पयेत्" (अ. सं. सू. २५) इति युक्त्या तदुचिता कापि मात्रा कल्पनीया ।

पञ्चचतुर्भिः स्नेहस्य मुहुर्त्तैर्न्यूनपादिकैः ।
पाकं याति समे त्वग्नौ विकल्प्यं मन्दतीक्ष्णयोः ॥

इति हि तन्त्रोक्तिः । अन्यच्च—

त्र्यहमच्छं मृदौ कोष्ठे क्रूरे सप्तदिनं पिबेत् ।
(अ. हृ. सू. १६.२९) इत्यत्र मध्यपातुः पञ्चषडहेष्वेकः कल्प्यत एव । "मात्राया न व्यवस्थास्ति" (अ. हृ. क. ६) इत्यादिश्चाचार्यव्यवहारः । तस्मादत्राविपर्ययः ।] इति विपर्ययः ॥



---

## २०. पूर्वपक्षः ॥

प्रतिज्ञातस्य चार्थस्य दूषकं वचनं पुनः ।
पूर्वपक्ष इति प्रोक्तः—
[पूर्वपक्षस्तु पूर्वेषां पक्षेष्वप्यात्मपक्षता ।
यथा— "चय एव जयेद्दोषान्" (अ. हृ. सू. १३. १५) इत्यादौ चयकाल एव कुपितदोषाविरोधेन दोषान् जयेत् । चयो द्विविधः कालजोऽपथ्याहारतश्च ।

---

२० पूर्वपक्षः ।
आक्षेपपूर्वकः प्रश्नः पूर्वपक्षः । यथा— कथं वातनिमित्ताश्चत्वारः प्रमेहा असाध्या भवन्तीति । इति सुश्रुतः ।

इति कालस्वभावोऽयमाहारादिवशात् पुनः ।
चयादीन् यान्ति सद्योऽपि दोषाः कालेऽपि वा न तु ।

(अ. हृ. सू. १२. २८) इत्याचार्यवचनात्। अपथ्याहारजं दोषचयं तत्काल एव शमयेत् । कालजं तु "शीतोद्भवं दोषचयं वसन्ते" (अ. हृ. सू. ४. ३५) इति वचनात् कोपकालादावेव-मुन्मार्गतायाः पूर्वमित्याशु प्रयोगः । तदा शोधयेत्। चय एव इत्यत्र एवशब्दादेतद्योतयति—

चयकाष्ठामुपारुह्य कुर्वते ते ह्युपेक्षिताः ।
प्रायशः सुचिरेणापि भेषजद्वेषिणो गदान् ॥

इत्यतो हेतोः सद्यः शमयेत् । तथा—

सर्वकोपे बलीयांसं शेषदोषाविरोधतः ।
क्रमान्मरुत्पित्तकफान् सर्वत्र सदृशे बले ॥
वातादीनां यथापूर्वं यतः स्वाभाविकं बलम् ।

(अ. सं. सू. २१) अस्य संवादः—

ऊचे पराशरोऽप्यर्थममुमेव प्रमाणयन् ।
यथोपन्यासतः प्राप्तमादौ दोषभिषग्जितम् ॥
नेतृभङ्गेन दृष्टो हि समं सैन्यपराजयः ।

(अ. सं. सू. २१) पक्षान्तराणि—

स्थानतः केचिदिच्छन्ति प्राक्तात्वच्छेष्मणो वधम् ।
शिरस्युरसि कण्ठे च प्रलिप्तेऽन्नरुचिः कुतः ॥
तदभावे कथं भोज्यपेयद्रव्यावचारणम् ।
असत्यभ्यवहारे च कुतो दोषविनिग्रहः ॥
तस्मादादौ कफो घात्यः कायद्वारार्गळो हि सः ।
मध्यस्थायि यतः पित्तमाशुकारि च चिन्त्यते ॥

अतो वायुसखस्यास्य कुर्यात्तदनु निग्रहम् ।
अत एव च पित्तादिः कफान्तोऽन्यैः क्रमः स्मृतः ॥
सुश्रुतस्य न सर्वत्र मतमेतद् ब्रवीमि तु ।
जयेज्ज्वरेऽतिसारे च क्रमात् पित्तकफानिलान् ॥
प्रायेण तापात्मतया ज्वरे तेजो विशिष्यते ।
विशेषाद्विसरं पित्तात् तथा च मृदुकोष्ठता ॥
तस्य चानुबलः श्लेष्मा गौरवापक्तिजाड्यकृत् ।
वायुश्च वर्द्धतेऽवश्यं यात्यहस्तु तयोः क्षये ॥
ज्वरातिसारयोस्तस्मादेष दोषजये क्रमः ।
कफपित्तानिलानन्ये क्रमादाहुस्तयोरपि ॥
तस्मादामाशयोत्क्लेशाद्भूयिष्ठं तत्समुद्भवः ।
क्रमेणाद्येन— (अ. सं. सू. २१) इति पित्तादिनानन्तरे-
ष्वात्मपक्षान्तर्भावः । तत्रापि विशिष्टः स्वपक्षः ।

प्रवृद्धान् स्वाश्रये स्थितान् ।
स्वाश्रयेषु प्रदुष्टानां स्थितैव ह्याशुकारिता ॥
विज्ञाय कर्मभिः स्वैः स्वैर्दोषोद्रेकं यथायथम् ।
भेषजं योजयेत्तत्तत् तन्त्रीकुर्यान्न तु क्रमम् ॥
(अ. सं. सू. २१)] इति पूर्वपक्षः ॥

---

२१. अनुमतम् ॥

तस्यानुमतमेव तत् ।
[अनन्वितानामर्थानां विधानं संविधानकृत् ।

यथा—

कफः पित्तं मलाः खेषु प्रस्वेदो नखरोम च ।

स्नेहोऽक्षित्वग्विशामोजो धातूनां क्रमशो मलाः ॥

(अ. हृ. शा. ३. ६३) इत्योजसो मलत्वमुक्तम् । अन्यत्र तु अत्यन्तशुद्धतया चास्य मलासंभव इति चोक्तम् । तत् कथमिति चेत् । ब्रूमः । धातूनां क्रमप्राप्तिर्युगपत् प्राप्तिश्चेति वहनद्वैविध्यमस्त्येव । उक्तञ्च— "तत्राहाररसो हि व्यानविक्षिप्तो यथास्वं सप्तसु धात्वग्निषु क्रमात् पच्यमानः स्वात्मकालप्रच्युतिसमकालमेव प्राप्तरक्तादिधातुसंज्ञः कालवदस्खलितबलप्रमाणो देहमूर्जयन् धातून् धातुमलांश्च पुष्णाति । अन्नकिट्टमच्छं मूत्रं घनं शकृत् । रसस्य सारो रक्तं मलः कफो लसीका च । रक्तस्य सारो मांसं कण्डराः सिराश्च मलः पित्तम् । मांसस्य सारो मेदस्त्वचो वसा च । किट्टं कर्णनासाक्षिरोमकूपप्रजननमलाः । x x x x x शुक्रस्य सार ओजः । अत्यन्तशुद्धतया चास्य मलासंभवः । अत एवान्येऽपि तस्य नेच्छन्ति पाकम् । (अ. सं. शा. ६) । उक्तं च तैः—

कफः पित्तं मलः खेषु प्रस्वेदो नखरोम च ।
नेत्रविट्त्वक्षु च स्नेहो धातूनां क्रमशो मलाः ॥

(अ. सं. शा. ६) इत्यत्रोजसो न मलत्वम् । शुक्रधात्वग्निस्तु परं दाह्याभावात् तत्रैव तिष्ठति ।

पारंपर्येण दावाग्नेस्तत्तत् प्राप्येन्धनं शिखा ।
वृद्धिक्षयौ यथा याति तद्वद्धातुपरंपरा ॥

(अ. सं. सू. १९) इति वचनात् । अन्ये पुनर्वर्णयन्ति—अभ्यवहृतमात्रस्याहारस्य कण्ठनाडीप्रलुठितस्य महानिम्नमवतीर्णस्य य एवांशः कायाग्निनावलीढः पाकमुपनीयते तस्यैव प्रसादाख्यो रसलेशोऽभिनिर्वृत्तिसमनन्तरमेव समं समस्तधातुषु

संवृतासंवृतस्रोतस्सु परिस्रुतो विवृतमुखेष्वासन्नेषु च भूयान् प्रथमतरं चान्वेति विपर्ययेणेतरेष्विति । अन्नरस एव साक्षात् सर्वधातून् केनचिदेव कालभेदेन पुष्णाति । न पुनर्धातवो धात्वन्तरतां स्वरूपोपमर्देनेन । (अ. सं. शा. ६) इति । अत्र अन्नरसस्य शुक्लधात्वग्निसमये रसात्मकमोजो भवति ।

दशमूलसिरा हृत्स्थास्ताः सर्वं सर्वतो वपुः ।
रसात्मकं वहन्त्योजस्तन्निबद्धं हि चेष्टितम् ॥

(अ. हृ. शा. ३. १८) इति वचनात् । तदोजसः शुक्लमलत्वमुच्यते । अन्यच्च—

रसाद्रक्तं ततो मांसं मांसान्मेदोऽस्थि मेदसः ।
अस्थ्नो मज्जा ततः शुक्लं शुक्लाद्गर्भः प्रजायते ॥

इति (अ. हृ. शा. ३. ६२) न्यायेन गर्भाशयपतितस्य निर्मलस्याप्यार्तवेनैकलोळीभूतस्य पित्तपक्वाशयान्तरे ऊष्मणा पच्यमानस्य शुक्लस्य सारो गर्भः । तत्सहकारिणः पुनरोजसो मलत्वमुच्येत ।

उक्तं च—

यत्सारमादौ गर्भस्य यच्च गर्भरसाद्रसः ।
संवर्तमानं हृदयं समाविशति यत् पुरा ॥
यच्च गर्भरसः स्नेहः प्राणो यत्र प्रतिष्ठितः ।
यस्यानाशान्न नाशोऽस्ति प्रीणिता येन देहिनः ॥
हृदयस्थमपि व्यापि तत्परं जीवितास्पदम् ।
मृदु सोमात्मकं शुद्धं रक्तमीषत् सपीतकम् ॥
यन्नाशे नियतं नाशो यस्मिंस्तिष्ठति तिष्ठति ।
निष्पद्यन्ते यतो भावा विविधा देहसंश्रयाः ॥

इत्यादि ।

ओजस्तेजस्तु धातूनां शुक्लान्तानां परं स्मृतम् ।

इति धातुवहनक्रमजातस्य शुक्लस्य मलत्वमङ्गीकुर्वन्ति । तस्मात् पक्षद्वयमप्याचार्यमतमेव । अपरे पुनर्वर्णयन्ति । "द्विविधा वातादयः प्राकृता वैकृताश्च । तत्र प्राकृताः सप्तविधायाः प्रकृतेर्हेतुभूताः शरीरैकजन्मानः । ते शरीरधारणाद्धातुसंज्ञाः । दोषाख्यानां वैकृतानां बीजभूताः । मुमूर्षोः स्वरूपाच्चलन्ति । वैकृतास्तु गर्भादभिनिस्सृतस्याहाररसस्य मलाः संभवन्ति प्राकृतेष्ववरोहन्ति । तद्वदोजोऽपि परं हृदयस्थमष्टबिन्दुप्रमाणमाधारः प्रासुतिकस्य रसात्मकस्यौजसः क्षयवृद्धिभाजः । (अ. सं. शा. ८) इति । तद्वदिति प्राकृतवत् ॥] इत्यनुमतम् ॥

---

## २२. विधानम् ॥

यथाप्रकरणं यत् तद्विधानं च तथोच्यते ।
[अपास्यानुमतं पक्षानात्मपक्षव्यवस्थितिः ॥

यथा—

यथा रसाङ्गुः पाकान् षट्केचित्तदसांप्रतम् ।
यत् स्वादुर्व्रीहिरम्लत्वं न चाम्लमपि डाडिमम् ॥
याति तैलं च कटुतां कटुकापि न पिप्पली ।
यथा रसत्वे पाकानां न स्यादेवं विपर्ययः ॥

---

२२ विधानम् ।

प्रकरणानुपूर्व्याऽभिहितं विधानम् । यथा— सक्थिमर्मण्येकादश प्रकरणानुपूर्व्याऽभिहितानि । इति सुश्रुतः ।

(अ. सं. सू. १७) इत्यादिना परपक्षमपास्य प्रायः स्वादुः स्वादुलवणयोरम्ळोऽम्ळस्य कटुरितरेषामिति । प्रायश्शब्देन क्वचित् क्वचिद्व्यभिचारं दर्शयन्नात्मपक्षं स्थापितवानाचार्यः । रसान्तरं विपाक इति कल्पने स्वाद्वम्ळकटुकानां रसान्तरत्वं तु मधुराम्ळकटुकस्कन्धद्रव्यरसभेदाद्युज्यत एव । तस्माद्रसैः स्वाद्वादिभिरसौ तुल्यफल इति । फले वातादिशमनकोपनाख्ये तुल्य इति वचनाद्रसान्तरत्वमुरीकृतम् । तर्हि रसविपाककार्ययोर्न भेद इति चेत् । नैवम् । रसकार्याद्विपाककार्यं बलीयः । उक्तं च—

रसं विपाकस्तौ वीर्यं प्रभावस्तान्यपोहति ।
बलसाम्ये रसादीनामिति नैसर्गिकं बलम् ॥

(अ. हृ. सू. ९. २५) इतीदृशा स्वभावशक्तिः । अन्यच्च पराशरः पठति—

पाकास्त्रयो रसाना-
मम्ळोऽम्ळं पच्यते कटुः कटुकम् ।
चत्वारोऽन्ये मधुरं
संसृष्टरसास्तु सङ्कीर्णम् ॥
कटुतिक्तकषायाणां
कटुको येषां विपाक इति पक्षः ।
तेषां पित्तविघाते
तिक्तकषायौ कथं भवतः ॥

(अ. सं. सू. १७) इति ।

तत्र यन्मधुरं रसविपाकयोः शीतवीर्यं च द्रव्यं यच्चाम्ळं

तयोरुष्णवीर्यं च । यद्वा कटुकं तेषां यथास्वं रसेभ्यः प्रायो गुणान् दोषकोपशमनत्वं च विद्यात् । तद्यथा क्षीरमदिरामरिचादीनाम् । रसादिसङ्करेण त्वन्यथात्वम् । यथा मधु मधुरं श्लेष्माणं शमयति कटुविपाकतया । सकषायत्वाद्रौक्ष्याच्च वातं जनयति शीतवीर्यत्वाच्च । x x x x । अम्लं काञ्जिकं कफं जयति रूक्षोष्णत्वात् । कपित्थं तु रौक्ष्यात् । आमलकं पित्तं शीतवीर्यत्वात् स्वादुपाकतया च । कफं रौक्ष्याल्लाघवाच्च । शैत्यरौक्ष्यलाघवैस्तु न वातं जयति । लवणं सैन्धवं स्वादुपाकतया पित्तं जयति लाघवात् कफम् । कटुका शुण्ठी स्नेहौष्ण्यस्वादुपाकैर्वातं क्षपयति । पिप्पली च । तिक्तानि व्याघ्रीविशल्याकागरूण्युष्णवीर्यत्वात् पित्तं जनयन्ति । कषायतिक्तं महत्पञ्चमूलं वातं जयति न पित्तमुष्णवीर्यत्वात् । कषायश्च कुलत्थोऽम्लपाकतया चेति । एतन्निदर्शनमात्रमुक्तम् । (अ. सं. सू. १७) । तेन—

किञ्चिद्रसेन कुरुते कर्म वीर्येण चापरम् ।
द्रव्यं गुणेन पाकेन प्रभावेणैव किञ्चन ॥

(अ. सं. सू. १७) ] इति विधानम् ॥

---

## २३. व्याख्यानम् ॥

विशिष्टबुद्धिगम्यं यज्ज्ञातं व्याख्यानमेत्र तत् ।
[व्याख्यानमात्मनोक्तानामात्मनैवार्थभाषणम् ॥

यथा— "पित्तविकारः पुनरोषः प्लोषो दवो दवथुः" (अ. सं.

---

२३ व्याख्यानम् ।

तन्त्रेऽतिशयोपवर्णनं व्याख्यानम् । यथेह पञ्चविंशतिकः पुरुषो व्याख्यायते । अन्येष्वायुर्वेदतन्त्रेषु भूतादिप्रकृत्यारब्धचिन्ता । इति सुश्रुतः ।

सू. २०) । इत्यादीनामाशुकारितया चिकित्साकारि । तेषां स्वरूपं व्याख्यातवानाचार्यः । "तत्र सर्वाङ्गीणस्तीव्रः सन्तापो दाहः । स्वेदारतिमानोषः । प्रादेशिकः स्वेदरहितोऽग्न्यार्चिषेव दाहः प्लोषः । मुखोष्ठतालुषु दाहो दवः । चक्षुरादीन्द्रियेषु दाहो दवथुः । पाणिपादांसदेशेषु विविधः सन्तापो विदाहः । (अ. सं. सू. २०) इत्यादि] इति व्याख्यानम् ॥

—0—

२४. संशयः ॥

संशयो नाम साकांक्षं विज्ञेयं यदनिश्चितम् ।
[निर्द्धारितानामर्थानामव्यवस्था तु संशयः ।
यथा— साध्ययोरपि संयोगो बलिनोर्यात्यसाध्यताम् ।
विद्यादसाध्यमेवातः साध्यासाध्यसमागमम् ।
नासाध्यः साध्यतां याति साध्यो याति त्वसाध्यताम् ।
पादापचाराद्दैवाच्च यान्त्यवस्थान्तरं गदाः ॥
(अ. सं. सू. २) चशब्दोऽत्र विकल्पे ।
समुच्चयान्वाचययोस्तुल्ययोगे च कारणे ।
इतरेतरयोगेऽपि च यद्यर्थविकल्पयोः ॥] इति संशयः ॥

—0—

२४ संशयः ।
उभयहेतुदर्शनं संशयः । यथा— तलहृदयाभिघातः प्राणहरः पाणिपादच्छेदनमप्राणहरमिति । इति सुश्रुतः । संशयमाह— उभयेत्यादि । उभयोर्विसदृशयोरर्थयोर्हेतुः तस्य दर्शनम् । उदाहरणमाह— यथा तलेत्यादि । ननु, एतत् संशयज्ञानार्थमुदाहृतं, संशयोऽस्ति कुतः? तलहृदयाभिघातस्य तथा पाण्यादिच्छेदस्य प्राणहरत्वाप्राणहरत्वाभ्यां पृथग्दर्शितत्वात् । सत्यं, परं यत्र घातच्छेदयोर्द्वयोः सद्भावस्तत्र किं तलहृदयाभिघातान्मरणमुत पाणिपादच्छेदनाज्जीवनमित्येवं संशयः । इति डल्हणः ।

## २५. अतीतावेक्षा ॥

अतीतं यदवेक्ष्योक्तमतीतावेक्षणं हि तत् ॥

[भवेदतीतावेक्षा सा भूयोऽप्युक्तव्यपेक्षिता ।

यथा— "समः समाने स्थानस्थे" (अ. हृ. शा. ३. ७३) इत्यादेः "तैर्भवेद्विषमः" (अ. हृ. सू. १. ८) इत्यादिग्रन्थार्थमवेक्ष्य समाने स्थानस्थे इति वाक्येन समैर्दोषैः समाग्निः । विमार्गग इति वाक्येन वातोत्कर्षेण विषमोऽग्निः । पित्तोत्कर्षेण तीक्ष्णोऽग्निः । कफपीडित इति मन्दोऽग्निर्भवेत् । इति हि तात्पर्यम् । अन्यथा व्यवहारव्याहतिरेव । एवमत्र समानानिलप्राधान्यस्य को हेतुरिति चेत्— "सिराविभागे ये चोक्ता विषमाद्यास्त्रयोऽग्नयः ।" (अ. सं. नि. ८) इत्यादिवचनादग्निः परं रक्षितव्यः । तस्य च "समानोऽग्निसमीपस्थः" (अ. हृ. सू. १२. ८) इति वचनात् समानस्य प्राधान्यं कलितवानाचार्यः । अग्नीनां लक्षणम्—

यः पचेत् सम्यगेवान्नं भुक्तं सम्यक्समस्त्वसौ ।
विषमोऽसम्यगप्याशु सम्यक्चापि चिरात् पचेत् ॥
तीक्ष्णो वह्निः पचेच्छीघ्रमसम्यगपि भोजनम् ।
मन्दस्तु सम्यगप्यन्नमुपयुक्तं चिरात् पचेत् ॥
कृत्वास्यशोषाटोपान्त्रकूजनाध्मानगौरवम् ।

(अ. हृ. शा. ३. ७४–७६)] इत्यतीतावेक्षा ॥

---

२५ अतीतावेक्षा ।

यदुक्तमित्यतिक्रान्तावेक्षणम् । यथा— चिकित्सितेषु ब्रूयात् श्लोकस्थाने यदीरितमिति । इति सुश्रुतः ।

## २६. अनागतावेक्षा ॥

अनागतं भविष्यद्यत्तस्यावेक्षा यथोच्यते ।
[भवेदनागतावेक्षा भावितार्थप्रदर्शनम् ।

यथा— "मूत्रजेषु तु पाने च" (अ. हृ. सू. ४. ६) इत्यादिग्रन्थस्य मूत्रनिरोधजेषु व्याधिषु पाने प्राग्भक्तं भक्तात् पूर्वं यामद्वयजरणलक्षणया मात्रया घृतं शस्यते। एतन्मात्राद्वयमनागतमवाक्पीडनादवपीडकं नाम । स तीक्ष्णाग्निश्चेत् तदुचिता कापि मात्रा कल्प्या । वातहरत्वेऽप्यल्पमूत्रत्वात् तैलं न शस्तम् ]।
इत्यनागतावेक्षा ॥

---

## २७. स्वसंज्ञा ॥

तन्त्रकारैः स्वतन्त्रेषु प्रणीता परतन्त्रके ।
न प्रसिद्धा हि या संज्ञा स्वसंज्ञा सा प्रकीर्तिता ॥
[स्वसंज्ञा सा तु या संज्ञा स्वतन्त्रेष्वेव दृश्यते ।

यथा— "शाखा रक्तादयस्त्वक् च" (अ. हृ. सू. १२. ४४) इति संज्ञिता । यद्येवं "स्नेहक्लिन्नाः कोष्ठगा" (अ. हृ. सू. १७. २९) इत्यादिग्रन्थे शाखाः किं व्यपदेशाः । तत्र शाखाः

---

२६ अनागतावेक्षणम् ।
एवं वक्ष्यतीत्यनागतावेक्षणम् । यथा— श्लोकस्थाने ब्रूयात् चिकित्सितेषु वक्ष्यामीति । इति सुश्रुतः ।

२७ स्वसंज्ञा ।
अन्यशास्त्रासामान्या स्वसंज्ञा । यथा— मिथुनमिति मधुसर्पिषोर्ग्रहणं, वा लोके प्रथितमुदाहरणम् । इति सुश्रुतः ।

पाणिपादाः । सिराविभागे तु "तत्रैकैकत्र शाखायां शतं" (अ. हृ. शा. ३. २०) इत्युक्तत्वात् ] । इति स्वसंज्ञा ॥

---

२८. ऊह्यम् ॥

ऊह्यं तु यदनुद्दिष्टं ग्रन्थे प्राप्ताविचारितम् ।
योज्यते स्वयमेव द्राक्तदौचित्यपुरस्सरम् ॥

[ऊह्यमुक्तानुसारेण विशिष्टार्थविवेकिता । यथा— "अकाले बहु वाल्पं वा भुक्तं" (अ. हृ. सू. ८. ३४) इत्यादौ अकाल इत्यतीतोऽप्राप्तकालश्च । बह्विति यथोक्तमितरधिकता । अल्पमिति तदल्पता । तेन अतीतकाले बहु भुक्तं वा अप्राप्तकाले बहु वाल्पं वा भुक्तं विषमाशनं विद्यात् । अतीते तु— तत्र योज्यं लघुस्निग्धमुष्णमल्पं च भोजनम् (अ. हृ. सू. ४. १२) इति क्षुन्निग्रहस्य चिकित्सितत्वेनोक्तत्वात् अल्पस्य न विषमाशनत्वम् । "अतिमात्रं पुनः सर्वानाशु" (अ. हृ. सू. ८. ४) इत्यस्य उदरपूर्तिरतिसौहित्यं चोक्तम् । मात्रालक्षणं तु पिण्डपरिमाणतस्तु "अन्नेन कुक्षेर्द्वावंशौ" (अ. हृ. सू. ८. ४६) इत्यादि । प्रतिद्रव्यापेक्षया "गुरूणामर्द्धसौहित्यं" (अ. हृ. सू. ८. २) इत्यादि । "अकाले बहु" (अ. हृ. सू. ८. ३४) इत्यादि

---

२८ ऊह्यम् ।

यदनिर्दिष्टं बुध्याऽवगम्यते तदूह्यम् । यथा— अभिहितमन्नपानविधौ, चतुर्विधमन्नमुपदिश्यते भक्ष्यं भोज्यं लेह्यं पेयमिति । एवं चतुर्विधे वक्तव्ये द्विविधमभिहितं, तत्रोह्यमिति । अन्नपानेऽविशिष्टे द्वयोर्ग्रहणे कृते चतुर्णामपि ग्रहणं भवतीति । चतुर्विधश्चाहारः प्रायेण द्विविधः प्रसिद्ध इति । किञ्चान्यत्— अन्नेन भक्ष्यमवरुद्धं अन्नसाधर्म्यात्, पेयेन लेह्यं द्रवसाधर्म्यात् । इति सुश्रुतः ।

कालापेक्षा । मात्रास्वरूपं तु "कुक्षेरप्रतिपीडनमाहारेण हृदयस्यासंरोधः पार्श्वयोरविपाटनमनतिगौरवमुदरस्य प्रीणनमिन्द्रियाणां क्षुत्पिपासोपरतिः स्थानासनशयनगमनोच्छ्वासप्रश्वासहास्यसंकथासु सुखानुवृत्तिः सायं प्रातश्च सुखेन परिणमनं बलवर्णोपचयकरत्वं च (अ. सं. सू. ११) इत्याचार्येणैव दर्शितम् । इत्यस्य नाधिकत्वं बहु । अत्यधिकमतिमात्रमित्यर्थः ॥

अन्ये व्याख्याकाराः अकाले भुक्तं बहु वाल्पं वा भुक्तं विषमाशनं विद्यादिति वर्णयन्ति । हीनातिमात्रमशनं मरुत्त्रिचयकोपनं इत्युक्तत्वात् ॥] इत्यूह्यम् ॥

—0—

२९. समुच्चयः ॥

समुच्चिनोति यद्वाक्ये बहून् स हि समुच्चयः ।

[समुच्चयस्तु योग्यत्वमुक्तानां तु प्रदर्शयेत् ।

यथा— "पेयां विलेपीं" (अ. हृ. सू. १८. २९) इत्यादौ यूषरसयोस्तु सान्नत्वं चशब्दाद्योग्यतया समुच्चीयते । अत्र प्रधानशुद्धस्य तृतीयदिनात् परं यूषरसाभ्यां त्रिदिनमपोह्य सप्तमेऽहनि प्रकृतिभोजनमित्यर्थः । एवमन्ययोरपि वेद्यम् । अकृतं कृतमिति यूषरसयोः प्रत्येकमिति केषाञ्चिन्मतम् ॥] इति समुच्चयः ॥

—0—

२९ समुच्चयः ।

इदं चेदं चेति समुच्चयः । यथा— मांसवर्गे एणहरिणलावतित्तिरिसारंगाः प्रधानमिति । इति सुश्रुतः ।

## ३०. निदर्शनम् ॥

निदर्शनं तु दृष्टान्तो येनान्यस्य प्रकाशनम् ।
[निदर्शनं त्वसंभाव्योऽप्यर्थो येन समर्थ्यते ।

यथा— "शुक्रार्तवगर्भाशयकालेषु मातुश्चाहारविहारैरेकोनेको वा दोषो भवत्याधिक्येन । तेनामरणाद्विषवल्यामिवोत्पद्यमानस्य क्रिमेर्विषेण सविषक्रिमेरिव वृश्चिकादेराशीविषस्येव वा विषेण प्रकृतिर्ज्जायते (अ. सं. शा. ८) । इत्यत्र दृष्टान्तत्रयं किं प्रयोजनमिति चेत् । उच्यते—

अल्पमध्यातिमात्रत्वाद्दोषाणां च विषस्य च ।
भवेत् प्रकृतिरित्युक्तं दृष्टान्तत्रितयं क्रमात् ॥

अत्र प्रकृत्युत्पादनं प्रत्येवमुक्तम् । प्रकृतिघाते तु रिष्टप्रकरणे— "पुष्पं फलस्य धूमोऽग्निर्वर्षस्य जलदोदयः" (अ. हृ. शा. ५. १) इत्यत्र दृष्टान्तत्रयेण—

चिरात् सद्योऽल्पकालेन सूचयन्त्यायुषः क्षयम् ।
रिष्टानीति हि निर्द्दिष्टं रिष्टाभासो न चेत्तदा ॥

प्रकृतिर्न्नाम शरीरस्वरूपं सा च जन्ममरणान्तराळवर्तिनी स्वकारणोद्रेकजनिता निर्विकारा कापि दोषस्थितिः ॥] इति निदर्शनम् ॥

—0—

---

३० निदर्शनम् ।

दृष्टान्तव्यक्तिर्निदर्शनम् । यथा— अग्निर्वायुना सहितः कुक्षौ वृद्धिं गच्छति तथा वातपित्तकफदुष्टो व्रण इति । इति सुश्रुतः ।

## ३१. निर्वचनम् ॥

गुणानामनिरुक्तं यत् तत्तु निर्वचनं मतम् ।

[तत्स्यान्निर्वचनं येन वाक्यस्यार्थः प्रदर्श्यते ।

यथा— शरीरारोहणादचिन्त्यप्रभावतयास्मिन्नूहासंभवाच्च निरूह इत्यादि । अनेन वस्तीनां प्रभावत्वं सूचितमेव । यथा—

यत्तत्रौषधवीर्यं तु तद्व्यानेन वायुना ।
पर्याप्तमचिरादेव समानः प्रतिपद्यते ॥
समानादुत्तरश्चैवं व्यानाद्याः पवनाः क्रमात् ।
ते तृप्ताः प्रकृतिं याताः शरीरानुग्रहे स्थिताः ॥
प्रशाम्य पित्तश्लेष्माणौ यथास्थानं निवेश्य च ।
सन्तर्पयन्ति परितः स्वान् स्वान् भूतगुणांस्तनौ ॥
व्यानस्तिर्यगपानोऽधः प्राणश्चोर्ध्वं प्रकर्षति ।
यथास्वमेव नाडीभिर्हरणीभिरिवोदकम् ॥
एवं वातः सिराभिश्च वपुर्वस्तिः सुयोजितः ।
व्याप्नुवन् प्रसभं हन्ति सुकृच्छ्रानपि यक्ष्मणः ॥

इत्यारोहणक्रमः । अन्नमनुवसन्नपि न दुष्यतीत्यनुवासनम् । अपि शब्दादच्छस्नेहस्य सान्नत्वे दोषः संभवति । तस्मान्निरन्न एवाच्छः । तथा हि— "सम्यग्घीनातियोगाश्च तस्य स्युः स्नेहपीतवत्" (अ. हृ. सू. १९. ५३) इत्युक्तत्वात स्नेहपानसमा-

---

३१ निर्वचनम् ।

निश्चितं वचनं निर्वचनम् । यथा— आयुर्विद्यतेऽस्मिन्ननेन वा आयुर्विन्दतीत्यायुर्वेदः । इति सुश्रुतः ।

नत्वमनुवासनस्य । ऽयहमच्छमनुवासरं दीयत इति पानयोर्विशेषः ।] इति निर्वचनम् ॥

---

३२. नियोगः ॥

नियोगो महतामाज्ञा कर्तव्याऽवश्यमेव या ।
[नियोगोऽतद्विधानां तु तद्विधश्च नियोजना ।

यथा— क्षीरगुणकथने "स्निग्धं गुरु शीतळ"मिति गुर्वादिपठिता गुणाः । स्वादुपाकादीनां तु साहचर्योपचारात् गुणत्वमङ्गीकृतम् । आचार्येणापि "गुर्वादयो गुणा द्रव्ये पृथिव्यादौ रसाश्रये" (अ.हृ.सू. ९.४) इत्यादिना रसस्य गुणत्वं व्यपदिष्टम् । व्यपदिष्टं न तत्वतः । निर्गुणा गुणा इति न्यायात् । "इन्द्रियार्था व्यवायी च विकाषी चापरे गुणाः" (अ.सं.सू. १) इति रसस्य गुणत्वमुपचरितम् । तेनाहाररसपरिणामस्य विपाकस्यापि गुणत्वमुक्तम् । किं पुनर्गुणोत्कर्षस्य वीर्यस्य । इति पूर्वाचार्यस्य नियोगः । अन्यच्च—

बृंहणं लंघनं चैव शमनं शोधनं तथा ।
स्तंभनं स्वेदनं चापि क्लेदनं शोषणं पुनः ॥
रोपणं लेखनं चैव प्रसादनविलोळने ।
श्ळथनं दृढनं चापि धारणं व्यापनं पुनः ॥
विवृतिः संवृतिश्चैव तथा क्षाळनलेपने ।
एतानि भौमाप्याग्नेयवायव्यान्यपि विंशतिः ॥

---

३२ नियोगः ।
इदमेव कर्तव्यमिति नियोगः । यथा— पथ्यमेव भोक्तव्यमिति । इति सुश्रुतः ।

अन्यानि चैवं रूपाणि गुर्वादिगुणशक्तयः ।
अतो दोषकोपशमनत्वमपि गुणकार्यमेव । गुणो नाम द्रव्यस्य कापि वैशिष्टिः । आचार्येण तु "प्रत्येकं तच्चतुर्गुणम्" (अ. हृ. सू. १. २७) इति भिषगादिवैशिष्टिर्दर्शिता । गुरुमन्देत्यादावष्टविधं वीर्यं च । गुर्व्रादिसूचनार्थं हि तत्तत्पदच्छेदकल्पना कृता ।] इति नियोगः ॥

---

२३. विकल्पनम् ॥

एवं वा कार्यमेवं वा बहुचिन्ता विकल्पनम् ।
[विकल्पनमनिर्द्धार्यमर्थं प्रति विवचनम् ।
यथा— "बृंहणं लङ्घनं वालमतिमेदोग्निवातजित् ।" (अ. हृ. सू. १४. ३२) इति स्थूलस्य दुश्चिकित्स्यत्वमुक्तम् । कथमिति चेत्—

स्रोतस्सु मेदोरुद्धेषु वायुः कोष्ठे विशेषतः ।
चरन् प्रज्वलयत्यग्निं क्षुन्तृषौ भवतोऽधिकम् ।
स्थूलं कोटरवद्वृद्धौ दहतोऽग्न्यनिलौ च तौ ।

(अ. सं. सू. २४) इत्युक्तत्वात् । मेदोहराण्यग्न्यनिलकराणि । मेदस्कराण्यग्न्यनिलहराणि । ततो विरुद्धोपक्रमत्वात् "न हि स्थूलस्य भेषजम्" (अ. हृ. सू. १४. ३१) इति भेषजसिद्धिरुक्ता । "विळङ्गं नागरं" (अ. हृ. सू. १४. २४) इत्याद्यपार्थकमेव स्यात् ॥] इति विकल्पनम् ॥

—0—

३३ विकल्पनम् ।
इदं वेति विकल्पः । यथा— रसौदनः सघृता यवागूर्वा । इति सुश्रुतः ।

## ३४. प्रत्युत्सारः ॥

प्रत्युत्सारो वारयेत परस्परमतानि यत् ।

[प्रत्युत्सारः पदाद्यन्तमध्यलोपो यथायथम् ।

यथा— "वेगान्न धारयेत्" (अ. हृ. सू. ४. १) इत्यादौ अधः-शब्द आदिपदलोपः । अनन्तरमेव "अधोवातस्य'- (अ. हृ. सू. ४. २) इत्युक्तत्वात् । द्रवद्रव्यविज्ञानीयमित्यत्र स्वरूपशब्दो मध्यपदलोपः परत्रान्नस्वरूपविज्ञानीयमित्युक्तत्वात् । दिनचर्यामित्यत्र दिनेषु पुरुषस्य चर्या नत्वध्यायस्य । तेन चर्याविज्ञानीयमिति वक्तव्ये विज्ञानीयशब्दोऽन्ते लुप्तः । अन्यत्र विज्ञानीयशब्दप्रयोगात् । एवमृतुचर्यादयः । "अन्नं कालोऽभ्यवहृतं" (अ. हृ. शा. ३. ५५) इत्यत्र आदिमध्यान्तशब्दा लुप्ताः ।]

इति प्रत्युत्सारः ॥



## ३५. उद्धारः ॥

उद्धारो नाम चोद्यस्य युक्तस्य परिहारगीः ।

---

३४ प्रत्युत्सारः ।

यत्रोपपत्तिं दर्शयन्तः परस्परमतानि निवारयन्ति । तद्यथा— अस्थ्नां शतानि षष्टीनि त्रीणि दन्तनखैस्सह । धन्वन्तरिस्तु त्रीण्याह सन्धीनां च शतद्वयम् । दशोत्तरं सहस्रे द्वे निजगादात्रिनन्दनः । इति पूर्वमतात् षष्टिं प्रत्युत्सारयति सन्धिसहस्रद्वयं साधयन् । इत्यरुणदत्तः ।

३५ उद्धारः ।

शास्त्रारंभप्रत्याख्यानादिचोद्यस्य समाधानम् । तद्यथा— दृश्यन्ते भगवन् केचिदात्मवन्तोऽपि रोगिणः । यावत् हिताहितविभागस्य फलं तस्मादनिश्चितं इति कृते चोद्ये न चिकित्साऽचिकित्सा च तुल्या भवितुमर्हतीति परिहारः । इत्यरुणदत्तः ।

[उद्धारः प्रथमं प्रोक्तमर्थमुद्धृत्य योजना ।
यथा— "निद्रायत्तं सुखं दुःखं" (अ. हृ. सू. ७. ५३) इत्यादिना प्रोक्तमर्थं "अकालेऽतिप्रसङ्गाच्च" (अ. हृ. सू. ७. ५४) इत्यादिना सुखायुषी प्रत्याहृत्य कथितम् । अतिप्रसङ्गादिति न कालपरः । निद्राधिक्यपर एव । अन्यथा अकालप्रसङ्गः स्यात् निद्रायाः । अकाल इति मिथ्यायोगः । अतिप्रसङ्गादित्यतियोगः । न चेति हीनयोगः । एवं त्रिविधा निद्रा "सुखायुषी पराकुर्यात्" (अ. हृ. सू. ७. ५५) । अपरा सम्यङ्निषेविता निद्रा दुःखमरणे प्रत्याहृत्य पराकुर्यादिति चशब्दादागता । निद्रा नाम तामसी कापि वृत्तिः ।

लोकादिसर्गप्रभवा तमोमूला तमोमयी ।
बाहुल्यात्तमसो रात्रौ निद्रा प्रायेण जायते ॥

(अ. सं. सू. ९) इति वचनात् ।

अपच्यमानो बाहुल्यात् स्रोतांस्यावृणुते कफः ।
ततः स्रोतस्सु रुद्धेषु जायते गात्रगौरवम् ।
गुरुगात्रस्य चालस्यमालस्याद‌तिनिद्रता ।

(अ. सं .सू. ९) इति निद्राधिक्यम् ।

श्लेष्मावृतेषु स्रोतस्सु श्रमादुपरतेषु च ।
इन्द्रियेषु स्वकर्मभ्यो निद्राविशति देहिनाम् ॥

(अ. सं. सू. ९) इति । तदावेशविवशस्य शयनं स्वप्नः ।

सर्वेन्द्रियव्युपरतौ मनोऽनुपरतं यदा ।
विषयेभ्यस्तदा स्वप्नं नानारूपं प्रपश्यति ॥ (अ. सं. सू. ९)

स्वप्नसमये दर्शनविशेषोऽस्तु । किं तु "निद्रानाशादङ्गमर्द"

(अ. सं सू. ९) इत्यादिश्च "निद्राया मोहमूर्द्धाक्षि" (अ. सं. सू. ९) इत्यादिश्च पुनरुक्त इव । मैवम् । अतिभाष्यादिना निद्रानाशादङ्गमर्द्दादयः । निद्राया वेगधारणान्मोहादयः ।

दिवास्वप्नप्रसङ्गे तु मुहूर्त्तं स्वपनं मतम् ।
ततोऽधिकं यदि भवेत् कोपाय कफपित्तयोः ॥
अकालशयनान्मोहज्वरस्तैमित्यपीनसाः ।
शिरोरुक्कासहृल्लासस्रोतोरोधाग्निमन्दताः ॥
तत्रोपवासवमनस्वेदनावनमौषधम् ।
योजयेदतिनिद्रायां तीक्ष्णं प्रच्छर्द्दनाञ्जनम् ॥
नावनं लङ्घनं चिन्तां व्यवायं शोकभीक्रुधः ।
एभिरेव च निद्राया नाशः श्लेष्मातिसंक्षयात् ॥
निद्रानाशादङ्गशिरोगौरवालस्यजृंभिकाः ।
जाळ्यग्लानिभ्रमापक्तितन्द्रा रोगाश्च वातजाः ॥
यथाकालमतो निद्रां रात्रौ सेवेत सात्म्यतः ।

(अ. हृ. सू. ७. ६१–६५) इत्यनेन हीनमिथ्यातियोगनिद्राणां रोगांश्चिकित्सां चोक्तवान् ।

कालस्वभावामयचित्तदेह-
खेदैः कफागन्तुतमोभवा च ।
निद्रा बिभर्त्ति प्रथमा शरीरं
पाप्मान्तगा व्याधिनिमित्तमन्या ॥

(अ. सं. सू. ९) इति विशेषविभागश्च प्रोक्तः ।] इति उद्धारः ॥

—

३६. संभवः ॥

संभवो नाम चोत्पत्तिरुपदिष्टतरं च यत् ।
येनोपपद्यते,—
[संभवो भावयेद्युक्त्या तन्त्रार्थमनुरूपया ।

यथा— "नित्यं हिताहारविहारसेवी" (अ. हृ. सू. ४. ३४) इत्यादिना निजरोगानुत्पत्तिरुक्ता । "अर्थेष्वलभ्येषु" (अ. हृ. सू. ४. ३५) इत्यादिनागन्तुरोगानुत्पत्तिः । "कालोऽनुकूलः" (अ. हृ. सू. ४. ३६) इत्यादिना कर्मरोगानुत्पत्तिः । इति बोध्यम् । यथा तावत् "तेऽर्थप्रत्यायनपराः" (अ. सं. सू. १) इत्यादिना महर्षीणां वचनानादरत्वमुद्घोषितवता लाघविकेनाचार्येण श्रीवाहटेन पद्यत्रयमिदं न प्रसज्येत ।] इति संभवः ।

प्रोक्ताः षट्त्रिंशत् तन्त्रयुक्तयः ॥
इति तन्त्रगुणैर्युक्तमित्युक्तौ गुणशब्दतः ॥

—0—

३६ संभवः ।
उपपत्तिर्यस्मिन्नुपदिश्यतेऽनुपदिष्टे । यथा— दुष्टरक्तापगमनात् सद्यो रागरुजां शमः इत्युक्तम् । प्रच्छानालाबुजळौकाश्रृंगसिराव्यधैः यथासंभवं रक्तमपनीयते । यथोक्तं प्रच्छानेनैकदेशस्थं ग्रथितं जलजन्मभिः । हरेच्छ्रृंगादिभिः सुप्तमसृग्व्यापि सिराव्यधैरिति । एवमन्यत्रापि संभवार्थो योज्यः ।

[1]अथ व्याख्याभेदा उच्यन्ते ॥

व्याख्यागुणाश्च गृह्यन्ते तन्त्रालङ्कारकोविदैः ।
पिण्डव्याख्या पिण्डितार्थप्रतिपादनमुच्यते ॥
पदव्याख्या पदच्छेदं कृत्वा व्याख्यानमीरितम् ।
तेषां पदानां विवृतिः पदार्थव्याख्ययोच्यते ॥
अधिकृत्यानुषङ्गेण व्याख्याऽधिकरणात्मिका ।
सा हि प्रकरणव्याख्या या तद्वदिति वर्ण्यते ॥
अर्थव्याख्या नाम यत्र स्वभावस्योपवर्णनम् ।
कृच्छ्रव्याख्या यत्नतोऽर्थस्योत्पादनमुदीर्यते ॥
फलव्याख्या बहूक्तीनां फलग्रहणमीरितम् ।
इतस्ततः समाकृष्य स्वोचितार्थस्तु साध्यते ॥
यत्र सा ह्युचितव्याख्या तन्त्रकारैरुदीर्यते ।
यस्याधिकारो निक्षिप्तस्तत्संबन्धवशादिह ॥
अन्यार्थोऽप्यभिधीयेत न्यासव्याख्या हि सा स्मृता ।
यत् सूत्रं स्वार्थवद्वक्ति परमर्थमपि ध्रुवम् ॥
एषा प्रयोजनव्याख्या फलनिष्पत्तिकारिणी ।
यत्क्रमात् सूत्रमारब्धं तत्क्रमेण पुनस्तथा ॥
अभिधा साऽनुलोमाख्या व्याख्या पूर्वैरुदीरिता ।
येन क्रमेण सूत्रे हि निक्षिप्तोऽर्थो विहाय तम् ॥

---

[1] व्याख्याभेदाः पूर्वोक्तक्रमेणात्र न लिखिताः । अत्र तु पिण्ड-पदपदार्थाधिकरणप्रकरणार्थकृच्छ्रफलोचितन्यासप्रयोजनानुलोमप्रतिलोमसूत्र-समध्वजाख्या इति क्रमो वेद्यः ।

वक्त्यन्यथा प्रतीलोमव्याख्या वाच्यबहुत्वतः ।
यथासूत्रन्तु या वक्ति व्याख्या सूत्रसमा हि सा ॥
उन्नतत्वं महत्वं च ध्वजशब्दात् प्रतीयते ।
सर्वप्रकाशनं यत्र ध्वजव्याख्या हि सा स्मृता ॥

---

[1]अथ कल्पना वक्ष्यन्ते ॥

गुणप्रसङ्गादुच्यन्ते कल्पना अपि सप्तधा ।
प्रधानकल्पना नाम प्रधानस्य हि कल्पना ॥
कल्पना च प्रधानेन तत्रेति द्विविधा हि सा ।
येन धर्मेण युक्तोऽसौ समर्थो भवति ध्रुवम् ॥
तेन धर्मेण युक्तत्वाद् गुणः सा गुणकल्पना ।
समवर्ती कालमृत्यू रिष्टं पूर्वोत्तरं स्पृशेत ॥
चशब्दयोगाद्विवृताविल्येषा लेशकल्पना ।
सर्वविद्याप्रवेशोऽत्र शास्त्रकारस्य सूचितः ॥
आर्द्रसन्तानेतत्याद्यैर्वाक्यैः सेङ्गितकल्पना ।
विभवस्योक्तपूर्वत्वादनुक्तत्वादिहापि च ॥
चिन्तनीयोऽपि शेषोऽत्र व्याख्यास्वन्यासु मृग्यताम् ।
भक्तिर्नामोपचारोऽस्य कल्पना भक्तिकल्पना ॥
आज्ञा नामानुयोगेन विनाऽनुष्ठापने विधिः ।
न लिखेत् भूमिमित्याद्या कल्पना स्यात्तथा मता ॥
कल्पना कल्पयित्वा ता निर्विकल्पं च सप्तधा ।

---

[1] प्रधानगुणलेशेंगितविभवभक्त्याज्ञाः क्रमेणात्र निरूपिताः कल्पनाभेदाः ।

❶अथाश्रया निरूप्यन्ते ॥

आश्रीयन्ते शास्त्रकारैरेकविंशतिराश्रयाः ।
आदिलोपादयस्तत्र पूर्वस्य व्रणहा रसः ॥
धारणोदीरणेत्यादि चोदाहरणमीक्ष्यताम् ।
मध्यलोपे द्रवद्रव्यविज्ञानीयमिति स्मृतम् ॥
अन्नस्वरूपश्रवणादथान्यत्र कफं पुनः ।
इत्यन्तलोपादन्ते च पूर्वत्रास्त्रोक्तिवैभवात् ॥
आदौ षड्रसमप्यन्नं मधुरीभूतमीरयेत् ।
इत्यारभ्यात्र मध्यान्तलोपादुभयलोपकः❷ ॥
अन्नं कालेऽभ्यवहृतमित्यादौ सर्वलोपकः ।
तत्र खात् खानि देहेऽस्मिन्नित्यत्रार्णत्रयं पुनः ॥
भवन्तीत्युपजन्येव व्याख्या वर्णोपजानकम ।
आप्या जिह्वा रसक्लेदा इत्यादौ तु द्वयोर्भवेत् ॥
तद्धितश्रवणाद्वाक्यशेषं पूर्वं यथैव तत् ।
ऋषिकैरृषिपुत्रैर्वा प्रमादाद्यदुदीरितम ॥

---

❶ आश्रया एकविंशतिरित्युक्तम् ।
१. आदिलोपः । २. मध्यलोपः । ३. अन्तलोपः । ४. उभयलोपः । ५. आदिमध्यान्तलोपः । ६. उपधालोपः । ७. वर्णोपजानं । ८. ऋषिक्लिष्ट । ९. तन्त्रशैली । १०. तन्त्रसंज्ञा । ११. प्रकृताख्यं । १२. समानतन्त्रप्रत्ययः । १३. परतन्त्रप्रत्ययः । १४. हेतुहेतुकः । १५. कार्यकारणधर्मः । १६. आद्यन्तविपर्ययः । १७. शब्दान्यत्वं । १८. प्रत्याख्यधर्मः । १९. उपनयः । २०. संभवः । २१. विभवः ।

❷उभयलोपस्तु त्रिधा भिद्यते । यथा— आदिमध्यलोप आद्यन्तलोपो मध्यान्तलोप इति । अत्र तु मध्यान्तलोपस्यैवोदाहरणं प्रदर्शितम् ॥

तत्क्लिष्टं रोमलोमेति, तन्त्रशैली स्वभावतः ।
अस्थ्नां शतानि षष्ट्या चेत्यादि संक्षिपति स्वयम् ॥
शिष्यार्थं पुनरेतच्च विस्तारयति वाहटः ।
तन्त्रसंज्ञा स्वसंज्ञैव वाक्यशेषोपजानवत् ॥
यथा कषायसंज्ञा सा स्वरसादिषु पञ्चसु ।
क्वाथेऽपि च विधीयेत, प्रकृतं प्रस्तुतं स्मृतम् ॥
सैन्धवग्रहणं नाश्वे वैद्येनाप्रकृतत्वतः ।[1]
समानतन्त्रप्रत्ययो क्षारपाणीयतन्त्वतः ॥
नीचरोमनखश्मश्रुरित्यादौ दशरात्रता ।
परतन्त्रप्रत्ययतः शीतोष्णादिकलक्षणैः ॥
कालस्य संभवो योग इति बौद्धागमोक्तितः ।
यो हेतुर्हैतुकेनात्र ज्ञायते हेतुना च सः ॥
सधर्मः पित्तळाहारात पैत्तं सरणमस्रवत् ।
स्यादित्येवानुमीयेत यतोऽसौ हेतुहैतुकः ॥
कार्यकारणधर्मोऽत्र यत्र कार्येण कारणम् ।
कारणेन च कार्यं च दोषा रोगाख्यया मता ॥
रोगा दोषाख्यया चैव यथा वा कार्यकारणात् ।
पानीयं प्राणिनां प्राणा यथा दोषो न तिष्ठति ॥

आद्यन्तविपर्यासौ

निर्दिश्येते क्रमेण नाद्यन्तौ ।

---

[1] लिखितपुस्तके "सैन्धवग्रहणन्नाश्वे वैद्येनाश्वस्य प्रकृतत्वतः" इति दृश्यते । तन्न शुद्धं, अश्वशब्दस्य पुनरुक्तत्वात् वृत्तभंगाच्च । अत्र सैन्धवग्रहणन्नाश्वे वैद्येनाप्रकृतत्वतः, सैन्धवग्रहणं वैद्ये नाश्वस्य प्रकृतत्वतः इति द्वौ पाठौ संभाव्यौ । तयोर्युक्तता चिन्तनीया ।

यत्र प्राग्द्रवभावः
पूज्यन्त्वन्नं पुनश्च निर्दिष्टम् ॥
शब्दान्यत्वमभिन्नेर्थे शब्दवैशिष्ट्ययोजनम् ।
रोगः पाप्मा ज्वरो व्याधिरित्याद्युक्तदिशा मतम् ॥
हेतुधर्मोपपत्त्यैव धर्मः प्रत्ययपूर्वकः ।
हेतुस्तदनुषक्तौ तु इत्याद्युक्त्या निरूपितः ॥
सूत्रप्रस्तावने यत्र प्रोक्तं प्रकरणं परम् ।
विषूचिकाचिकित्सोक्ता यथैवोपनयस्तु सः ॥
संभवस्संभवत्यस्मादन्योऽर्थ इति कीर्तितः ।
अन्नं कालेऽभ्यवहृतमिति पीतादिकं स्पृशेत् ॥
विभवो नाम यत्सूत्रमर्थस्य व्यापकं भवेत् ।
कायबालग्रहेत्यादि व्याप्नोति सकलं यथा ॥
व्याख्यया विभवोऽयं सा पाठाद्विभवकल्पना ।
इत्यत्रोक्त्यैव सिद्ध्यर्थं प्रागेषा नोपवर्णिता ॥
उपधालोपशून्यत्वादाश्रया विंशतिः स्मृताः ।
इति केषाञ्चन मतं मृग्योऽयमिति मन्महे[1] ॥

—0—

[1] "उपधा—मन्महे" इत्युक्तत्वादस्य ग्रन्थकारस्य मतमपि द्योतितम् । तत्पक्षे विंशतिराश्रया एव ।

❶अथ ताच्छील्यादीनि प्रदर्श्यन्ते ॥

ताच्छील्यादीनि च पुनः कथ्यन्ते दश पञ्च च* ।
धर्मसादृश्ययुक्तत्वं ताच्छील्यं समुदाहृतम् ॥
यथा सुप्तेस्तु सादृश्यात् सुप्तिरित्यभिधीयते ।
यत्रैकदेशेनोक्तेन तज्जातीयोऽपि नोदितः ॥
संभाव्यते तथा तस्य प्रतिपक्षेण चेतरः ।
स तत्रावयवः प्रोक्तो लङ्घनैः स्वस्थतादिकम् ॥
अलङ्घनेन चास्वास्थ्यं भवेदिति यथोदितम् ।
विकारपाठात् प्रकृतिर्विकारः प्रकृतीरणात् ॥
द्विधा विकारो निर्दिष्टः पत्रे पुष्पे फले यथा ।
शाकं पाठा शठी चेति तत्रोदाहरणं द्विधा ॥
नालोचितन्तु सामीप्यं भूयस्त्वन्तु विवेचितम् ।
अम्लो रोचन इत्युक्तः कदाचित् कस्यचिद्भवेत् ॥
न रोचनः स्वादुरपि भूयस्त्वेनैष रोचनम् ।
प्रकारो नात्मधर्मो यः समानो यस्य स स्मृतः ॥
कण्ठमेरण्डनाळेन वमेदभिमृशन्निति ।

---

❶ताच्छील्यादीनि सप्तदशेत्युक्तम् ।तद्यथा—
१. ताच्छील्यम् । २. अवयवः । ३. विकारः । ४. सामीप्यम् । ५. भूयस्त्वम् । ६. प्रकारः । ७. गुणगुणिभावः । ८. संसक्तता । ९. तद्धर्मिता । १०. स्थानम । ११. तादर्थ्यम् । १२. साहचर्यम् । १३. कर्म । १४. गुणनिमित्तता । १५. चेष्टानिमित्तता । १६. मूलसंज्ञा । १७. तारतम्यम् ।

*ताच्छील्यादीनि सप्तदशैव । अत्र तु "दश पञ्च च" इत्युक्तम्, तच्चिन्त्यम् ।

वचने तत्प्रकाराणामन्येषामपि च ग्रहः ॥
गुणशब्देन गुणिनि पञ्चाहारगुणानिति ।
गुणी गुणेनैव यथा बभूवुरमितायुषः ।
गुणगुणिभावो गणितो,
ज्ञेया संसक्तता पुनः केति ।
संसर्गोऽप्युपदिष्टो
बहुषु त्वेकत्र सङ्गमोद्रेकः ॥
स्वादुस्कन्धे मधु
तद्गुणितं यद्वत् कषायमधुरमपि ।
ततस्तद्धर्मिता नाम पाशान्वैवस्वतानिति ॥
स्थानिना वा पुनस्थानं स्थानी वा व्यपदिश्यते ॥
स्थानेन स्थाननामैतत् कर्णश्च रसना यथा ।
प्रयोजनार्थं यो भावस्तेनैव व्यपदिश्यते ॥
तादर्थ्यं नाम तत् प्रोक्तं छर्द्दनं छर्द्दनात्मकम् ।
यत्र येनात्र नित्यः स्याद्बन्धः सहचरः स च ॥
संबन्धिभावं लभते यथा धूमं हि पावकः ।
मुनयः प्रशमं जग्मुरित्यत्र प्रशमाह्वयम् ॥
न स्थानं कर्मणा प्रोक्तं विषयेभ्यो निवर्तनम् ।
एषा कर्मनिमित्तता ॥
धर्म्यं यशस्यमित्यादि गुणो गुणनिमित्तता ।
चेष्टानिमित्तता ज्ञानं ज्वलतीति क्रिया न तु ॥
ऊर्ध्वगत्यादिकाः प्रायः पावकस्यैव लक्ष्यते ।
मूलसंज्ञा तु लोकेऽस्मिन्नर्थेऽन्यत्र निवेशिता ॥
निदानं पूर्वरूपाणि रूपाणीत्यादिकं पुनः ।

स्वशास्त्रसंज्ञया स्वाभिप्रेते त्वर्थे निवेशनम् ॥
तन्त्रसंज्ञा स्वसंज्ञा च मूलसंज्ञेति च त्रिधा ।
अभिन्नाऽपि च टीकाभिरीषद्भिन्ना विचारिता ॥
तत्स्थ्यं नाम यदन्यस्य भावस्त्वन्यस्य कल्प्यते ।
वस्तिमेहनयोः शूलमिति स्वस्योपचर्यते ॥



अलङ्काराष्षण्णवतिस्तन्त्राधिकरणादयः ।
इत्युक्तास्तुङ्गमान्योऽसौ पुत्रः सार्थो भवेदतः ॥
सरसः सुप्तपद्मस्य रविदीधितयो यथा ।
यथा गृहस्य दीपाभा यथा तन्त्रस्य युक्तयः ॥
वाक्यार्थयोजनादेता युक्तयः स्वेष्टसिद्धिदाः ।
असद्वादिप्रयुक्तानां वाक्यानां प्रतिषेधिकाः ॥
लीनव्यत्यासलेशोक्तिगदितानां प्रकाशिकाः ।
वाक्यन्यायोदधेः सारं गृहीत्वैव व्यवस्थिताः ॥



अथ तन्त्रदोषाः कथ्यन्ते ॥

दुर्लक्षणविहीनत्वमङ्गानामपि भूषणम् ।
इत्यलङ्कारसंबन्धाद्दोषविज्ञानमीर्यते ॥
अप्रसिद्धं दुष्प्रणीतमसुखारोह्यसङ्गतम् ।
विरुद्धमतिविस्तारमतिसंक्षिप्तमेव च ॥
सन्दिग्धं पुनरुक्तं च निष्प्रमाणाप्रयोजने ।
असमाप्ताक्षरं तद्वद्व्याहतं स्यादपार्थकम् ॥
अप्रसिद्धादयस्त्वेते तन्त्रदोषाश्चतुर्दश ।
एतैरिह विहीनत्वात्तन्त्रदोषविवर्जितम् ॥

एतत्सर्वं समालोक्य व्याख्यासु हृदि गृह्यताम् ।
तन्त्रालङ्कारबन्धोऽयं तन्त्रयुक्तिविदां सताम् ॥
हृदयान्तमलंकुर्याद्धृदयान्तान्मयोदितः ।
अंभोधिमध्यादमृतं विधार्य
सञ्जीवनात्मागमसाभिधानात् ।
प्रीतिं वितन्वन् विबुधेषु वृष्ट्या
धन्वन्तरिर्भाति स नीलमेघः ॥
वातगत्या स्थितिं कुर्वन् नीलमेघो महाकविः ।
सञ्जीवनामृतं सारं क्वचिद्वर्षति न क्वचित् ॥
वासव्यान्दिशि गोकर्णाद्योजनत्रितये महान् ।
उष्ट्रुरुन्नाम यो ग्रामः पण्डितैरभिमण्डितः ॥
तत्राभवद्विष्णुनामा भारद्वाजो भिषक्तमः।
मेधावी कीर्तिमांच्छ्रीमांस्कन्धत्रितयपारगः ॥
दूष्यादीनां विभागज्ञः क्रियासिद्धो नृपप्रियः ।
रोगा यन्नातिवर्तन्ते साध्याः साधु चिकित्सिताः ॥
येन त्यक्ता न दृश्यन्ते शान्ताः क्वापि चिकित्सकैः ।
अन्यैरशक्यास्तु पुनः शक्या यस्य भवन्त्यपि ।
एवमादिगुणोपेतो व्यपेताखिलकल्मषः ॥
आयुर्वेदान्वयी सर्वभिषजामेकनायकः ।
यस्तस्यास्ति सुतो विद्वान्नाम्ना नारायणो भिषक् ॥
भिषगार्यमिति प्राहुर्यं पुनर्भिषगादयः ।
अभिधानमञ्जरीं ता-
मास्वाद्यान्तर्मधुव्रतव्रातैः ।
भिषगार्यो भिषगाख्यैः
कृतवान् धरणौ सकलपतरुकल्पः ॥

गोत्रे स वाहटादीनां गोत्रान्तरविलासिनाम् ।
गात्रामयापहानां च शास्त्रामृतकरी शुभे ॥
नीलमेघोऽपि संभूतो भिषगार्यपरिष्कृते ।
वाहटेनाष्टसाहस्रश्लोकैरत्र प्रदर्शिता ॥
अष्टाङ्गहृदयं हीति प्रपञ्चहृदयस्थितिः ।

---

## [1]लेशकल्पना ॥

लेशकल्पना नाम — अनुपदिष्टस्य विधेः कण्ठपाठेन यत्किञ्चित् सूत्रावयवान्तरमाश्रित्यार्थः कल्प्यते । यथा— नात्र शास्त्रे कालमृत्योरकालमृत्योर्वा किञ्चिल्लक्षणं प्रतीतम् । तत्तु लेशतोऽनुमीयते । कथमिति, यदा हि नियतकालमायुः क्षयं प्राप्नोति तदा हि रिष्टमुपपद्यते, न विषमापरिहारेण म्रियमाणानाम् । उक्तं हि— "भिषग्भेषजपानान्नगुरुमित्रद्विषश्च ये । वशगाः सर्व एवैते विज्ञेयाः समवर्तिनः ॥" इति । अत्र विकृतिविज्ञानीये मित्रद्विषश्चेति योऽयं चशब्दः सोऽस्माच्छ्लोकात् पूर्वकानि यानि रिष्टानि यानि चोत्तराणि तानि सर्वाण्येव समुच्चिनोति । समवर्ती हि कालमृत्युः, इतरस्त्वसमवर्ती । अत एव च तन्त्रान्तराख्ये ग्रन्थे कालमृत्योरेव रिष्टोत्पत्तिर्नाकालमृत्योरिति स्वाभिप्रायप्रकाशनार्थं स एव तन्त्रान्तराचार्यः शकटोदाहरणमङ्गीकृत्योक्तवान् । तथा हि यथा समेऽपि

---

[1] अत्र तन्त्रगुणादिकं तन्त्रदोषं चोक्त्वा पुनरनुबन्धरूपेण लेशकल्पनायाः किञ्चिद्विवरणमपि लिखितं दृश्यते । तदप्यत्र प्रकाशयामः ।

पथि रथो वाह्यमानः स्वप्रमाणक्षये भङ्गपूर्वरूपाण्याप्नोति, तथा नियतायुषः स्वप्रमाणक्षये रिष्टसंभवः। यथा च स एवाति-भाराक्रान्तत्वात् विषमपथाश्रितत्वाच्चाकालेऽपि क्षयमाप्नोति, तथाऽनियतायुषो रिष्टोत्पत्तिमन्तरेण मृत्युः स्यात्। यदि पुन-रनियतायुषोऽपि रिष्टोत्पत्तिपूर्वं मरणं कल्प्ये तदा वार्षिके षाण्मासिके वा रिष्टे समुत्पन्ने शुभहेतुयोगान्न मृत्युः स्यात्। अनियतायुषो हि सम्यगुपचारात् जीवितानुवृत्तिः विषमहेत्व-परिहारान्मृत्युश्च स्यात्। अत एव चानियतायुषोऽधिकृत्य रसायनान्युपदिष्टानि तद्योगाद्धययं यद्बहून्यपि वर्षाणि जीवेत्। नियतायुषस्तु कालो वर्षशतात् परेण जीवितस्य न निर्दिष्टः। यथोक्तं शारीरे— "मरणं प्राणिनां दृष्टमायुःपुण्योभयक्षयात्। तयोरप्यक्षयाद्दृष्टं विषमापरिहारिणाम् ॥" इति। तस्मा दत्राविशेषोक्तावपि नियतायुष एव रिष्टोत्पत्तिपूर्वं मरणमिति निश्चितं स्यात्। यथा च— "ऋतुचर्यां नामाध्यायं व्याख्या-स्यामः" इति प्रतिज्ञायां षड्‌ऋतुविशेषप्रतिपत्तिर्भवति, न तु "ऋतुस्तु द्वादशनिशा" इत्युक्तस्यर्तोः। "मनुष्या द्विविधा प्रोक्ता नियतानियतायुषः। तयोरत्रानुमानाद्यैर्भेदं विद्याद्वि-चक्षणः ॥ समवर्ती कालमृत्यू रिष्टं पूर्वोत्तरं स्पृशेत्। चशब्द-योगाद्विवृतावित्येषा लेशकल्पना" इति तन्त्रालङ्कारभूताया-मनेकाचार्यबहुमतायां लेशकल्पनाख्यायाम्। अस्यां तन्त्र-युक्त्यां सत्यामप्यस्योगविश्रामस्माकमनुयोगाः सन्ति बहवः। कथमिति चेत् ब्रूमः— "सर्वप्राणभृतां नित्यमायुर्युक्तिमपेक्षते" इत्यादि संग्रहोक्तौ "नियतस्यायुषो हेतुर्विपरीतस्य चापरा"

इति प्रतिपादितत्वान्मध्यमाधमकर्मपरिणामस्त्वनियतायुष्ट्वमिति सिद्धम् । नियतानियतायुषोः पुरुषयोरनियतायुरेव पूज्यतरः, यतः सम्यगुपचाराज्जीवितानुवृत्तिः । अनियतायुषोऽधिकृत्य रसायनान्युक्तानि ततः शताधिकानि बहूनि-वर्षाण्यपि जीवेच्च । नियतायुस्तु शतवर्षजीवित एव स्यात् । तस्मादु(दार?भ)योर्युक्तिरिति न घटते । अपिच– मरणं प्राणिनां दृष्टमित्यत्रापि, आयुषो नियतस्य परिग्रहः पुण्यशब्देनानियतस्य । अनियतायुषः क्षये रिष्टोत्पत्तिर्नेत्यत्र प्रतिपादितं तयोरित्युक्तत्वात् । विषमापरिहारेण म्रियमाणस्य नियतायुषोऽपि न रिष्टोत्पत्तिः । स्वप्रमाणक्षय एव रिष्टसंभवश्चात्राभिहितः । अस्मिंस्तुरीये युगे "अशीतिका विपद्यन्ते केचित् सप्ततिका नराः । परमायुःस्थितं षष्टिस्तदप्यस्य न निश्चितम् ॥" इति शिवशर्मोत्तरोक्तेः पुराणवादोऽप्यत्र परिग्राह्य एव बहुश्रुतः कालवेदीत्युक्तत्वात् । ततः स्वप्रमाणोऽपि संशयः । आयुषो नियतस्यापि द्विविधत्वं रोगस्यापि रिष्टस्यापि श्वासस्यापि मृत्योरपि । तस्मात् पुष्पं फलस्य धूमोऽग्नेरित्यादि मृत्युज्ञानसाधनम् । तत्रापि अरिष्टं नास्ति मरणमित्युक्तं रिष्टोत्पत्तिमन्तरेण मृत्युः स्यादित्यनयोः परस्परविरोधः । यदि पुनरपमृत्यौ रिष्टोत्पत्तिर्नास्ति । तर्हि तत्परिज्ञानं कथं स्यात् । अपमृत्युपरिहारार्थः खल्वायुर्वेदः ।

साक्षान्मृत्यौ हि रिष्टोद्भव इति गदितोऽ-
त्रापमृत्यौ न रिष्टं

रिष्टोनस्सोऽपमृत्युस्त्वगदविधिगुणैः
सन्निवार्यैव चैव ।
रिष्टाभावेन मृत्यौ भवति तदगद-
ङ्कारदोषो महीया-
नायुर्वेदोऽपमृत्योर्जय इह विहित-
श्चिन्तनीयोऽयमर्थः ॥

दोषोत्थे खलु निर्दोषे ज्ञानपूर्वक्रियागुणैः ।
अपमृत्यौ परीहारो वैद्यसिद्धान्त ईरितः ॥

भूपद्विष्टादिदोषप्रसर इह भवे-
द्विघ्नभूतो गदानां
रिष्टाभावेऽपि नूनं परिगणितमिदं
नैव मूढैर्भिषग्भिः ।
रिष्टाभासच्छलोक्त्या मृतिदिनमति-
वाह्याथ रिष्टप्रशंशा
मूढैर्गृह्येत चान्यैर्व्यवहृतिपदवी
सा न वैद्यस्य धर्मः ॥

अस्मिन् कलौ कालमृत्योः प्रागेव मृतिसङ्क्रमात् ।
रिष्टं न विद्यते पादगुणाभावादपायिता ॥

---

